# विवेक–साहस्री

**विद्यावाचस्पति, डॉ. उमारमण झा**
(एम.ए., न्यायाचार्य, पीएच.डी., डी.लिट्.)
प्राचार्य, केन्द्रीय संस्कृत विद्यापीठ,
विशालखण्ड–4, गोमतीनगर, लखनऊ

**सम्पादकौ**
**किशोरी रमण झा** (साहित्याचार्य, शिक्षाचार्य)
**डॉ. देवी प्रसाद तिवारी** (एम.ए., पीएच.डी.)

**तरुण प्रकाशन**
**लखनऊ**
**1997**

प्रकाशक :

**तरुण प्रकाशन**

1/1028 विशालखण्ड
गोमतीनगर, लखनऊ–226010
दूरभाष : 0522-393456

Published with the financial assistance from the Rashtriya Sanskrit Sansthan, New Delhi.

© लेखक

प्रथम संस्करण 1997
1000 प्रतियाँ

Rs. 61.00

लेजर कम्पोजिंग : ए एण्ड टी इण्टरप्राइजेज
लालबाग, लखनऊ

मुद्रक : **इण्डियन ऑफसेट प्रिंटर्स**
लालबाग, लखनऊ
दूरभाष – 272420, 210653



स्वर्गतानां पूज्यपितृचरणानां
रेवतीरमणझाशर्मणां स्मृतौ

यो देवार्चनकार्यचिन्तनरतो भूतेशभक्तस्सदा
धर्मात्मा मतिमान् विनीतपुरुषः सत्कर्मनिष्ठो बुधः।
पूज्यो यो भुवि रेवतीरमणझा सच्छोत्रियः पुण्यवान्
तातन्तं करुणालयं गुरुवरं भक्त्या नुमः स्वर्गतम्।।

# प्राक्कथनम्

भगवदनुकम्पया गुरुकृपया च विवेकसाहस्रीग्रन्थोऽयं पूर्णतां प्राप्तः। अस्मिन् ग्रन्थे शक्ति–विष्णु–शिव–पुरुषार्थ–राष्ट्र–सप्तपुरी–चतुर्धाम–व्यवहाराभिनन्दन–शुभाशीर्वादविषयकानि दशशतकानि स्वकीयैः श्लोकपुष्पैः विरच्य सन्माल्यं विदुषां समक्षं प्रस्तूयते मया।

अस्मिन् ग्रन्थे येषां प्राचीनानां नवीनानाञ्च कवीनां भावाः संगृहीताः सन्ति तेभ्यो प्रणतिपुरस्सरं धन्यवादाः वितीर्यन्ते। अस्य ग्रन्थस्य संशोधने पाठनिर्धारणे च प. वेदानन्द झा–डा. इन्द्रदेवद्विवेदि–डा. चेलनशर्म–डा. कृष्णमूर्ति–डा. वटोही झा प्रभृतीनां विदुषां साहाय्यं लब्धम्। अतस्तेभ्यो हार्दिकान् धन्यवादान् वितीर्य राष्ट्रिय संस्कृत संस्थानस्य निदेशकवर्याणां डा. श्रीकमलाकान्तमिश्रमहोदयानां कृते कार्तज्ञ्यं विनिवेदयामि येषामनुकम्पया ग्रन्थोऽयं प्रकाश्यते। राष्ट्रिय संस्कृत संस्थानस्य वित्तसहाय्येनैव अयं ग्रन्थः प्रकाश्यते।

श्रेयांसि बहुविघ्नानि इति वचनानुसारमेव अस्य ग्रन्थस्य लेखने बहवो विघ्नाः समभवन्। तत्र सुधीनां सहयोगेन गुरूणामाशीर्वचोभिश्च येन केन प्रकारेण ग्रन्थोऽयं मया पूर्णतां नीतः। गुरुचरणानां श्रीमतामनन्तलालठक्कुरपादानां, स्वजनन्याः सरस्वतीदेव्याश्चाशीर्वचोभिः कार्यमिदं सम्पन्नमिति कृत्वा उभयोश्चरणारविन्देभ्यः प्रणामाञ्जलयः समर्प्यन्ते। मम सहधर्मिणी श्रीमती विभा झा अपि मम सदैव प्रेरणादात्री वर्तते। सापि धन्यवादार्हा वर्तते। मम पुत्राः श्रीविद्यारमण–श्रीकिशोरीरमण–श्रीगिरिजारमण–श्रीमथुरारमण झाः शुभाषिसां भाजः सन्ति। तरुण प्रकाशनं प्रत्यपि कृतज्ञतां निवेदयामि।

मुद्रणत्रुटिवशान्ममाज्ञानवशाच्च काश्चन त्रुटयोऽत्र स्युस्तास्तास्त्रुटीः संशोध्य मां संसूच्यानुगृह्णन्तु विद्वान्स इति शम्।

— उमारमण झा

# लेखक परिचय

विविधशास्त्रमर्मज्ञानां नैयायिकमूर्धन्यां विद्यावाचस्पति डॉ० उमारमण झा महोदयानां जन्म बिहार प्रान्ते मिथिलायां दरभंगामण्डलन्तर्गते उजान ग्रामे १८.७.१९४३ खीष्टाब्दे अभूत्। एतेषां पितृचरणाः स्व० रेवती रमण झा महोदयाः श्रोत्रियाः परमधार्मिकाः साधुपुरुषा आसन्। एतेषां जननी नैयायिक नीलाम्बर झा शर्मणः पुत्री परमधार्मिका सरला पूज्या च श्रीमती सरस्वती देवी (प्रसिद्ध नाम सरोजा देवी) साम्प्रतं परमवृद्धा भगवत परायणा वर्तते। बाल्यकालादेव पं० उमारमण झा कुशाग्र बुद्धिः कर्मठः सन् दारिद्रयदुःखसन्तप्तः अध्ययनरत आसीत। मैट्रिक, आई० ए०, बी० ए० (आनर्स), एम० ए० न्यायाचार्य, पी० एच० डी०, डी० लिट् प्रभृतिभिः उपाधिभिर्भूषितोऽयं मैथिलीविश्वविद्यालयद्वारा महामहोपाध्यायेन कामेश्वरसिंहदरभंगासंस्कृत विश्वविद्यालय द्वारा विद्यावाचस्पतिना सम्मानितः केन्द्रीय संस्कृत विद्यापीठे (तिरुपतौ, आन्ध्र प्रदेशे) अनुसन्धान सहायकाध्यापकरूपेण १९६९ तः १९७५ पर्यन्तं सप्तवर्षाणि यावत्, केन्द्रीय संस्कृतविद्यापीठेजम्मूनगरे १९७५ तः १९९० पर्यन्तं १६ वर्षाणि व्याख्यातृपदे विभागाध्यक्षरूपेण च, १९८४ तः तत्रैव प्रवाचकपदे १९९० तः १९९४ पर्यन्तं गुरुवायूर केद्रीयसंस्कृतविद्यापीठे केरले प्राचार्यपदे, एवं तदानीमेव वर्षद्वयं यावत् राजीवगान्धीकेन्द्रीयसंस्कृतविद्यापीठे (श्रृंगेर्या कर्णाटके) च प्राचार्य पदे वर्षद्वयं यावत्, एवं सन् १९९४ तः अद्यपर्यन्तं केन्द्रीयसंस्कृत विद्यापीठे लक्ष्मणपुर्याम् (उत्तर प्रदेशे) प्रचार्य पदे कार्य करोति। एतेषां पण्डित्यं साहित्ये, शाक्त दर्शने, न्याये, आंग्लभाषायांच विशेषेण वर्तते। एतेषां मार्गदर्शने ३० शोधच्छात्राः विद्यावारिधि (पी.एच.डी.) इत्युपाधिधारिणः सन्ति। एतेषां प्रकाशिताः ग्रन्थाः (१) न्यायसारविचार (२) दशपदार्थशास्त्रम् (३) तर्कप्रवेशः (४) आंजनेयचिन्तनम् (५) लक्ष्मी सरस्वत्योर्विवादः (६) श्री नेहरूचारुचर्चा (७) फिलोसोफिकल एड्रेस (८) विवेक साहस्री च सन्ति। अप्रकाशिता अपि दशाधिकाः प्रौढ़ग्रन्थाः सन्ति। एतेषां द्विशताधिकाः निबन्धाः कथाः कविताश्च हिन्द्यां मैथिली भाषायां, संस्कृते, आंग्ल भाषायांच विभिन्नासु पत्रिकासु, अभिनन्दन ग्रन्थेषु, विश्व

संस्कृत सम्मेलन पत्रिकाषु प्राच्य विद्या सममेलन पत्रिकादिषु च प्रकाशिताः सन्ति।

एतेषां गुरवः पं० रेवती रमण झा, डॉ० त्रिलोक नाथ झा, अम्बिकानाथ मिश्र, डॉ० परमानन्द झा, पं० रूपनाथ झा, पं० दुर्गाधर झा, कवि शेखर, बदरीनाथ झा, प्रो० श्री अनन्त लाल ठक्कुर, डॉ० शीतांशुशेखर वाग्ची, प्रो० रामानुज ताताचार्यवर्या आसन्। सर्वेषु अन्यतमो गुरुः सहायकश्च महामहोपाध्यायाः राष्ट्रपति सम्मानिताः दर्शनकेशरिणः प्रो० श्री अनन्तलाल ठक्कुरपादाः सन्ति। विद्यावाचस्पतिः डॉ० उमारमण झा, मैथिली, हिन्दी, बंगला, संस्कृत, आंग्ल भाषा, डुग्गर भाषा तेलुगु, मलायलम् प्रभृतिभाषायां विशेषज्ञोऽस्ति। कांचीपुरस्य शंकराचार्येण, श्रृंगेरीशंकराचार्येण, उडूपीस्थ पीठाधीश्वरेण, आदिचुंचनगिरिपीठाधीश्वरेण, उज्जयिन्यां, वाराणस्यां, गोरक्षपुरे, जम्मूनगरे, लक्ष्मणपुर्यामन्यत्र च एते सम्मानिताः सन्ति। विश्व संस्कृत सम्मेलनेषु प्राच्य विद्या सम्मेलनेषु विश्वविद्यालयेषु च एते शास्त्रार्थे, शास्त्रचर्चायां, व्याख्याने च विद्वद्भिरनुमोदिताः। कामेश्वरसिंह संस्कृतविश्वविद्यालय–सम्पूर्णनन्द संस्कृत विश्वविद्यालय बनारस हिन्दू विश्वविद्यालय, मिथिला विश्वविद्यालय राष्ट्रिय संस्कृत संस्थान, चण्डीगढ़ विश्वविद्यालय, जम्मू विश्वविद्यालय, कालीकट विश्वविद्यालय प्रभृति संस्थासु परीक्षक विशेषज्ञ रूपेण एते कार्य कृतवन्तः। एतेषां भार्या श्रीमतीविभादेवी सरला धार्मिका च वर्तते। श्री विद्या रमण, श्री किशोरी रमण, श्री गिरिजा रमण, श्री मथुरा रमण झाः चत्वारः पुत्राः त्रयः भ्रातरः द्वे भगिन्यौ अन्ये च सम्बन्धिनः सन्ति। इतिशम्।

**सतीरमण झा**
अनुजः

# सम्पादकीय

विवेक साहस्री संस्कृत भाषा में लिखा गया एक प्रौढ़ ग्रन्थ है। सामान्य लोगों के लिए हिन्दी में ही परिचय देना उचित है।

विवेक साहस्री विद्यावाचस्पति डॉ० उमारमण झा द्वारा विरचित एक हजार (११ सौ से अधिक) श्लोकों का संग्रह ग्रन्थ है। इस ग्रन्थ में दस शतक हैं :–

| | |
|---|---|
| १ शक्तिशतकम् | दश महाविद्या, दुर्गा, सीता, सरस्वती, गंगा आदि शक्तियों की स्तुतियाँ। |
| २ विष्णुशतकम् | विष्णु, राम, कृष्ण, वेंकटेश, गुरूवायूर आदि देवों की स्तुतियाँ। |
| ३ शिवशतकम् | शिव द्वादशज्योतिर्लिंग, वैद्यनाथ तथा अन्य शिवलिंगों की स्तुतियाँ। |
| ४ पुरुषार्थचिन्तनशतकम् | धर्म, अर्थ, काम, मोक्ष, चिन्तन पंचाशिका। |
| ५ राष्ट्रशतकम् | राष्ट्रिय भावना से सम्बद्ध श्लोक संग्रह। |
| ६ सप्तपुरीशतकम् | अयोध्या, मथुरा, गया, काशी, कांचीपुर, अवन्तिका तथा द्वारका के विषय में श्लोक संग्रह। |
| ७ चतुर्धाम–विविध तीर्थशतकम् | श्री जगन्नाथ, श्री रामेश्वर, श्री बदरीनाथ, श्री द्वारकाधीश, कुरुक्षेत्र, प्रयाग, मिथिला आदि की स्तुतियाँ। |
| ८ व्यवहारशतकम् | वस्त्र, गृह, विद्वान्, शुभकामना, कलिप्रभाव, जननी, समस्यापूर्ति आदि पर श्लोक संग्रह। |
| ९ अभिनन्दनशतकम् | संस्कृत के विभिन्न विद्वानों एवं भारत के विशिष्ट पुरुषों का अभिनन्दन। |

| | |
|---|---|
| १० श्रद्धांजलि–प्रणामांजलि शुभाशीर्वादशतकम् | इसमें दिवंगत विद्वानों को श्रद्धांजलि, पूज्यों को प्रणामांजलि एवं शिष्यों तथा प्रिय बच्चों को शुभाशीर्वाद दिए गए हैं। |

कवि ने विभिन्न छन्दों में अलंकारिक ढंग से रस से ओतप्रोत वाणी में काव्य की रचना की है।

प्रस्तुत ग्रन्थ डॉ० उमारमण झा द्वारा विभिन्न जगहों पर विभिन्न समय में लिखे गए श्लोकों का संग्रह है। संस्कृत के श्लोकों का संशोधन बहुत ही कठिन होता है, जो त्रुटियां रह गयी हों, सुधीजन उसके लिए क्षमा करेंगे।

सम्पादकद्वय

किशोरी रमण झा

डॉ० देवी प्रसाद तिवारी

# विषय सूची

# विवेक—साहस्री

## शक्तिशतकम्



या दिव्या निगमादिशास्त्रगदिता ध्येया सदा योगिभि—
र्या विद्या विधि—विष्णु—शंकरनुता माता परा सात्विकी।
नानाभावसमन्विता गुणमयी सर्वार्थ—सन्तानिका
सा देवी करुणानिधानदयिता पायादपायाच्चिरम्।।

# दशमहाविद्या–स्तुतिः

## महाकाली

नीलां स्वच्छदिगम्बरां भगवंतीं भीमां करालीं शिवां
खड्गं सन्दधतीं परां त्रिनयनां भीमुण्ड–मालाधराम्।
घोरां दुष्टविनाशिनीं शिवमहाकालीं नु दंष्ट्रायुतां
ध्यायेत्तां परमेश्वरीं खलु शवारूढां जगद्व्यापिनीम्।। १ ।।

## तारा

तारां दुःखहरां परां भगवतीं हुंकारबीजात्मिकां
खड्गेन्दीवरखर्पराभयकरां नागैर्युतां संस्तुताम्।
खर्वां तां नु शवस्थितां भयहरां घोराट्टहासां शिवां,
ध्यायेद्दिव्यविशालपिङ्गलजटां तामुग्रतारां शुभाम्।। २ ।।

## षोडशी

या बालार्कसमा शिवा भगवती दिव्यैश्चतुर्भिः करैः,
पाशाभीतिवरांकुशान् विदधती नेत्रत्रयोद्भासिता।
तां विद्यां सुभगां महेशदयितां बालां परामम्बिकां
दिव्यां लोकहितैषिणीं शुभकरीं श्रीषोडशीमाश्रये।। ३ ।।

## भुवनेश्वरी

शक्तिं तां परमेश्वरस्य निखिलां स्मेराननां भास्वती–
मुद्यद्भानुसहस्त्रकान्तिवलितां दिव्याम्बरां मातरम्।
हेमच्छत्रधरां शुभां भगवतीं पर्यंक–पद्मासनां
वन्देऽहं भुवनेश्वरीं त्रिनयनां शर्वस्य जायां पराम्।। ४ ।।

## छिन्नमस्ता

दिग्वस्त्रा परमेश्वरी त्रिनयना खड्गेन युक्ता शिवा
या देवी स्वकबन्धशोणितसुधाधारां पिबन्ती मुदा।
नागाबद्धशिरोमणिर्विलसति ध्येया सदा या सुरैः
शक्तिं तां हि परात्परां भगवतीं श्रीछिन्नमस्तां भजे।। ५।।

## श्रीभैरवी

देवीं भानुसहस्रकान्तिवलितां विद्यां परां शंकरीं
स्वर्णच्छत्रविभूषितां त्रिनयनां पद्माननां सुस्मिताम्।
रक्तालिप्तपयोधरां सुमुकुटां दुर्गां करालीं शिवां
मालापुस्तकधारिणीं भवजयां श्रीभैरवीमाश्रये।। ६।।

## धूमावती

दुर्गम्या मलिनाम्बरा हि विधवा दीर्घा परा चञ्चला
या काकध्वजयुक्तवाहनरथे क्षुत्क्षामकण्ठा स्थिता।
या रूक्षा विरलद्विजा भगवती शूर्पेण युक्ता करे
शक्तिं तां प्रणमामि शत्रुहनने धूमावतीं सर्वदा।। ७।।

## बगलामुखी

पीठे रत्नयुते सदा भगवती हस्तेन जिह्वां रिपो
र्धृत्वा मुग्दरधारिणी विजयते पीताम्बरा या शिवा।
मालाहारभृता प्रहारकरणे दक्षा परा वैरिषु
सा नित्या परमेश्वरी नु बगला पायाच्चिरं शत्रुतः।। ८।।

(तथा)

निहन्ति शत्रून् परमेशशक्तिर्जिह्वां कराग्रेण सदैव धृत्वा।
पीताम्बरा मुगद्‌रघोरपातैर्हत्वा रिपून् स्याद् बगला प्रसन्ना।। ९।।

## श्रीकमला

दीव्यद्धाटकसन्निभा सुखकरी सिक्ता चतुर्भिर्गजैः
सानन्दं कलशैः सुवर्णरचितैरासिच्यमाना परा।
हस्तैर्या दधती वराभययुगं रत्नप्रभाभा शुभा
तां देवीं कमलां भजे प्रतिदिनं पद्मां सरोजस्थिताम्।। १०।।

## मातङ्गी

मातङ्गीं शशिशेखरां त्रिनयनां दीव्यत्किरीटोज्ज्वलां
हस्ताब्जैर्दधतीमसिं सुविमलौ पाशांकुशौ सर्वदा।
पीठे रत्नसमन्विते भगवतीं दिव्याम्बरां संस्थितां
तां देवीं प्रणमामि विश्वजननीं स्वर्गापवर्गप्रदाम्।। ११।।

एता दशमहाविद्याः सर्वसौख्यविधायिकाः।
धनं धान्यं सुतं जायां भक्तेभ्यो ददति ध्रुवम्।। १२।।

प्रातः काले पठेद्यस्तु दशविद्यास्तुतिं शुभाम्।
विघ्नास्तस्य पलायन्ते गरुडात्पन्नगा इव।। १३।।

शत्रवो नाशमायान्ति पठनात्सप्तभिर्दिनैः।
सौभाग्यं लभते नूनं दशविद्याप्रसादतः।। १४।।

# शक्तिस्त्रोत्रम्

भक्तानामभयप्रदाननिरता नित्या जगन्मोहिनी,
सौख्यस्यायतनं परा भगवती पीयूषकल्लोलिनी।
दुष्टानां शमनी खलस्य दमनी सर्वार्थसिद्धिप्रदा
माता सा करुणानिधानदयिता पुष्णातु नो मङ्गलम्।। १।।

केचित्त्वां कलयन्ति देवि कमलां विष्णुप्रियां सादरं
मन्यन्ते च सरस्वतीं भगवतीं त्वामेव केचिज्जनाः।
अन्ये त्वामगजां वदन्ति सुधियः शर्वस्य जायां प्रियां
मातस्त्वं गिरिजे! ममैकशरणं जाने त्वहं केवलम्।। २।।

ब्रह्मा देवि चरीकरीति भुवनं स्थित्वा गुणे राजसे
विष्णुः साधु बरीभरीति सकलं लक्ष्मीप्रियः सात्त्विकः।
शर्वश्चापि जरीहरीति निखिलान् धृत्वा गुणं तामसं,
विष्णु–ब्रह्म–शिवास्त्रयोऽपि सबलाः शक्तिं तवैवाश्रिताः।। ३।।

मातस्त्वं जगतां गतिर्गिरिसुते ब्रह्माण्डनाथप्रिये!
ब्रह्माद्याः सकलास्तवैव सततं स्तोत्राणि कुर्वन्त्यमी।
सर्वं त्वं जगदम्बिके प्रकुरुषे त्रैलोक्यसञ्चालिनी
दुर्गर्वः खलु मादृशामहमहं कर्त्तेति भोक्तेति च।। ४।।

कैलासाचलवासिनीं फणिफणारत्नप्रभावच्छटां
नागाधीश्वरसौविदल्लघटितद्वारां सदा सुन्दरीम्।
भूतेशस्य सदा प्रियां भगवतीं सिंहस्थितां मातरं
वन्देऽहं करुणालयां शुभकरीं स्वर्गापवर्गप्रदाम्।। ५।।

# लक्ष्मीस्तुतिः

लक्ष्मीस्त्वं कमलासना भगवती विष्णुप्रिया सर्वदा,
सौख्यं भोग्यमथापि राज्यमखिलं त्वत्सेवया लभ्यते।
दीनाः क्लेशभरा भवन्ति मनुजा मातुः कृपामन्तरा,
तस्माद्देवि! कृपानिधानदयिते! सम्प्रार्थये त्वां नतः।। १ ।।

प्राज्यं राज्यं सुभोगाः कतिपयविभवा नृत्यवाद्यप्रयोगाः,
संयोगाः सत्सुखानां सपदि च कृपया ते जनानां भवन्ति।
मानस्तेषां हि येषां भवनमधिगता त्वं नराणां सुपूज्या,
मातस्त्वं दुःखहन्त्री हरिहरविधिभिः पूजिता लोकवन्द्या।। २ ।।

भ्राता ते शर्वमौलौ निवसति सुखदे! ते प्रियो माधवोऽस्ति,
तातो रत्नाकरस्ते सकलगुणनिधिर्लोकवन्द्यः स्वधन्यः।
विष्णोस्त्वं पट्टराज्ञी निखिलगुणगणैः श्रीपदख्याततत्त्वा
धन्या पूज्या च लोके त्वमसि सुवरदे! सर्वमाङ्गल्यदात्री ।। ३ ।।

भर्ता ते विश्वधर्ता भुवि समवतरन् सर्वलोकस्य पालो
मीनः कूर्मो वराहो नरहरिवदनो वामनश्छद्मवेशः।
रामो रामश्च कृष्णः सुगत इति तथा कल्किरूपो मुरारि—
स्त्रातुं साधून् जनान् यो जननि तव पतिः
सर्वलोकैकवन्द्यः।। ४।।

त्वया विरहितः पुमान् व्रजति घोरदुःखं चिरं
त्वया खलु विलोकितः सुखमनुत्तमं गच्छति।
समस्तगुणशालिनीं सपदि भुक्तिमुक्तिप्रदां
नमामि सुखदायिनीं जगति मातरं सादरम्।। ५ ।।

त्वया हीनो दीनो व्रजति निरयं भ्रान्तवलित—
स्त्वयाऽसक्तः शक्तो भवति मनुजो लब्धुमखिलम्।
सुतं सौख्यं धान्यं विविधसुखकीर्तिं सुविभवं
कृपातस्ते मातः सुखदशरणं दिव्यसदनम्।। ६।।

यदा त्वत्तो लब्धो विभवभरितं राज्यमखिलं
तदाऽसौ प्रख्यातो भवति नरपालो भुवि जनः।
कृपादृष्टिर्यावत् तव जननि! भूतेषु भवति,
सुखं सर्वं तावन्निरवधि च तेषां भुवि सताम्।। ७।।

विद्यावन्तः कृपणधनिकान् प्रार्थयन्ते कुलीनाः
सेवन्ते ते विभवरहितास्त्वद्विहीना धरायाम्।
लक्ष्मीभाजः सदसि सततं गीयमानाः समानाः
संस्तूयन्ते विमलमतिभिः सादरं भूतलेऽस्मिन्।। ८।।

लक्ष्मीति वर्णयुगलं सुखदं समेषां
लक्ष्मीति वर्णयुगलं हृदये च विष्णोः।
लक्ष्मीति कर्णकुहरे सुखदो हि शब्दो
लक्ष्मीं भजामि सुखदां हृदयेन दिव्याम्।। ९।।

हरिहरविधिवन्द्यां सत्त्वरूपां परां तां
विविधसुखविधात्रीं भुक्तिमुक्ति—प्रदात्रीम्।
सुरमुनि—जन—पूज्यां देवदेवाधिदेवीं
सकलभुवनकर्त्रीं मातरं तां नमामि।।१०।।

देवि! मातर्महामाये! शक्तिरूपे! हरिप्रिये।
नौत्युमारमणश्चापि पद्मपुष्पैः रमां सतीम्।।११।।

# सरस्वती—स्तोत्रम्

शुद्धस्फटिकसंकाशां वीणापुस्तकधारिणीम्।
नमामि भारतीं देवीं सर्वशुक्लां सरस्वतीम्।। १।।

मूको भवति वाचालो मूर्खश्च विदुषां वर:।
यस्या: कृपाकटाक्षेण तां देवीं प्रणमाम्यहम्।। २।।

ज्ञानं सुधामयं नूनं शारदा संप्रयच्छति।
यावन्न भवति! प्रीता तावत्किञ्चिन्न लभ्यते।। ३।।

महाविद्यां महावाणीं भारतीं त्वां सरस्वतीम्।
ब्राह्मीं देवीं कामधेनुं वेदगर्भां भजाम्यहम्।। ४।।

अक्षमालांकुशधरा वीणापुस्तकधारिणी।
पुनातु मां सदा शुक्ला हंसासनसुशोभिता।। ५।।

व्यक्ताव्यक्तगिर: सर्वे वेदाद्या व्याहरन्ति याम्।
सर्वकामदुधां धेनुं, सा मां पातु सरस्वती।। ६।।

अध्यात्ममधिदैवञ्च देवानां सम्यगीश्वरी।
प्रत्यगास्ते च पश्यन्ती सा मां पातु सरस्वती।। ७।।

या वसेत्प्राणजिह्वासु सदा वागुपवर्णनात्।
सेयं सरस्वती नाम्ना सदा ख्याता महर्षिभि:।। ८।।

अज्ञानतिमिराच्छन्ना वयं मूढ़ास्तथाऽधमा:।
इति मत्वा कटाक्षेण मातस्त्वं पाहि न: सदा।। ९।।

# शृङ्गेरी–शारदापीठम्

धन्यं भारतवर्षमस्ति भुवने तत्रापि कर्णाटकं,
राज्यं पुण्यतमं प्रसिद्धिवलितं प्रोक्तं पुराणादिषु।
यत्राऽसीत्स विभाण्डकात्मजवरः श्रीऋष्यशृङ्गो मुनिः,
शृङ्गेरी विदितास्ति पुण्यवसतिस्तत्रैव तुङ्गातटे।। १।।

श्रीमच्छंकरपाद एव सहसा मण्डूकमेकं यदा
शृङ्गेर्यामहिना तते फणतले संरक्षितं दृष्टवान्।
नूनं दिव्यतपोवनं खलु तदा श्रीऋष्यशृङ्गस्थलं,
ह्याद्यं पीठमिहैव कर्त्तुमुचितं मेने स तुङ्गातटे।। २।।

सुक्षेत्रे शुभपीठमेकमनघं संस्थाप्य पुण्यस्थले
शिष्यश्चापि सुरेश्वरो बुधवरस्तत्रैव संयोजितः।
ख्यातं यत्तु महीतले शिवकरं श्रीशारदापीठकं,
विद्यारण्यसमाश्च यत्र बहवः पीठाधिपाश्चाभवन्।। ३।।

तुङ्गातीरनिवासिनां शुभकरी श्रीशारदा राजते
या देवी वरदा समस्तजगतां संरक्षिका ज्ञानदा।
यस्याः सेवनभक्तिभावभरितः श्रीभारतीतीर्थकः
पीठाध्यक्षवरः सुधीर्यतिवरो राराजते साम्प्रतम्।। ४।।

# शारदा–स्तोत्रम्

या विद्या निगमादिशास्त्रगदिता संकीर्त्यते सूरिभि–
र्या दिव्या कमलासना शुभकरी ध्येया सुरेन्द्रैस्तथा।
पञ्चाशल्लिपिमण्डिताङ्गललिता ब्रह्मादिदैवैर्नुता
सा मां ब्रह्ममयी पुनातु कृपया दिव्यैः कटाक्षैर्भृशम्।। १ ।।

यामाराध्य बुधाः प्रसन्नवदनां ज्योतिर्मयीं चिन्मयीं,
दिव्यानन्दकरीं तुषारधवलां ज्ञानप्रदां शारदाम्।
सौख्यं ज्ञानमनन्तशास्त्रमथितं शीघ्रं लभन्ते ध्रुवं,
तां देवीं प्रणमामि विश्वजननीं स्वर्गापवर्गप्रदाम्।। २ ।।

शुद्धज्ञानस्वरूपां सरसिजनिलयां मातरं ध्यानगम्यां,
वाणीं कुन्देन्दुशुभ्रां विविधबुधनुतां मङ्गलानां विधात्रीम्।
सर्वार्थं संकीरन्तीं कलिकलुषहरां दिव्यरूपां प्रसन्नां,
वन्दे देवीं सुवक्त्रां हरिहरविधिभिस्संस्तुतां शारदां ताम्।। ३ ।।

मातस्त्वत्पदसेवनार्चनरताः ख्यातिं गतास्ते जनाः,
नाना काव्यकलाकलाप–कुशलाः वाल्मीकिबाणादयः।
श्रीव्यासस्त्वथ कालिदाससदृशा लब्ध्वा कटाक्षं शुभं
धन्या येऽद्य महीतले बुधजना मृत्वाऽपि जीवन्ति ते।। ४ ।।

मातस्त्वं वेदरूपा मधुरपदमयी शुद्धविज्ञानरूपा
संमूर्त्ता शास्त्रसारा श्रुतिसुखविमला पूजिता देववृन्दैः।
ब्रह्माद्यास्त्वां भजन्ते हरिहरसहिता भारतीं ज्ञानदात्रीं
नाऽहं शक्तस्त्वदीये गुणगणकथने देवि! मातः! क्षमस्व।। ५ ।।

मातस्त्वं भुवि पाहि दीनतनयान् मोहान्धगर्वान्वितान्,
नानापापरतान् कुकर्मवलितान् दुष्टाञ्छठान् मादृशान्।
याचे त्वां कृपया कटाक्षभरिता दृष्टिश्चिरं पात्यतां,
त्वत्पादाम्बुजसेवको जननि! भोः! सर्वत्र संशोभते।। ६।।

मातस्त्वां परिसेव्य सिद्धिमतुलां सम्प्राप्य ब्रह्मा क्षमः
स्रष्टुं विश्वमिदं हरिश्च भुवने रक्षां विधातुं प्रभुः।
श्रीशम्भुर्जगतोऽस्य नाशकरणे शक्तः सदा कीर्तितः
नूनं ते कृपया सदैव सफला धाता हरिः शंकरः।। ७।।

मातस्त्वत्पदपद्मसेवनरताः सौख्यं लभन्ते चिरं,
नूनं भूपतिलब्धमानधनिका ज्ञानाग्रगण्याः क्षितौ।
नानाशास्त्रविचारसारकुशलाः श्रीव्यासहर्षादयः
वाल्मीक्यादिसहस्रशोऽपि भुवने स्वर्गे च पातालके।। ८।।

या विद्या सत्त्वरूपा श्रुतिपदपरमा ज्ञानविज्ञानरूपा,
देवी संसारसृष्टिस्थितिविलयकरी मोहदर्पादिहन्त्री।
अद्वैतानन्ददात्री कविकुलजननी बन्धसंसारहन्त्री
सा नः पायादपायाद् विविध–सुरवरैर्नित्यवन्द्या प्रसन्ना।। ९।।

प्रज्ञानन्दमयीं समस्तजगतामाधारभूतां परां,
रम्याङ्गीं शरदिन्दुशङ्खधवलां सर्वार्थसिद्धिप्रदाम्।
तां विद्यां परमेश्वरीं भगवतीं सौम्यां परां पावनीं
वन्देऽहं जननीं विशालहृदयां तुङ्गातटे संस्थिताम्।। १०।।

पूज्या श्रीब्रह्मविद्या सुरमनुजनुता चिन्मयी ध्यानगम्या
मुक्तास्रङ्मण्डिताङ्गी ललितरसमयी श्वेतपुष्पावहासा।
कल्याणी सर्ववन्द्या निगमफलमयी मोहजाड्यापहन्त्री
पायादस्मानपायाच्छशधरवदना पुण्यतुङ्गातटस्था।। ११।।

हरिहरविधिवन्द्यां शारदां ज्ञानदात्रीं
सकलसुखविधात्रीं विश्वधात्रीं विधात्रीम्।
हृदयतिमिरहन्त्रीं सिद्धिविद्यादिदात्रीं
निगमफलसुगात्रां शारदान्तां नमामि।।१२।।

या तुङ्गातटवासिनी भगवती सर्वार्थसन्तानिका
नानाशङ्करशिष्यसन्ततिनुता दिव्या जगद्व्यापिनी।
तीर्थः श्रीयुतशङ्करो बुधवरः श्रीभारती स्तौति यां
तां देवीं करुणामयीं भगवतीं वन्दे जगन्मातरम्।।१३।।

नमस्तेऽस्तु महामाये! तुङ्गातटनिवासिनि!
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।१४।।

## गङ्गास्तुतिः

गङ्गे त्वं मुक्तिदात्री सुरनगरनदी रोगशोकापहन्त्री
लोकानां मुक्तिकर्त्री कलिकलुषहरा सौख्यभोगादिदात्री
भूलोकं पावयन्ती निजविमलरसैः शुभ्रनीरा प्रसन्ना
मातस्त्वं स्नेहमूर्तिर्वितरसि जगतां प्राणशक्तिं जनेषु।। १ ।।

गङ्गे ते रम्यतीरे विरचितशयनः पुण्यनीरं च पीत्वा
स्नात्वा यः पुण्यनद्यां शिव शिव विलपन् न्यस्तकार्यः सदैव।
गङ्गे गङ्गे ब्रुवंश्च त्यजति निजतनुं नूनमासाद्य नाकं
श्रीशम्भोर्वा हरेर्वा सपदि स भजते देवसायुज्यसौख्यम्।। २ ।।

गङ्गातीरे भवति वसतिः प्राणिनां पुण्यभाजां
नित्यस्नायी जगति लभते सर्वसौख्यप्रकर्षम्।
पूजां यज्ञं तव शुभरसैः पुण्यकार्याणि कुर्वन्
नूनं कामं झटिति भजते त्वत्प्रसादाद्धि मातः।। ३ ।।

या गङ्गा नरतापहा सुरनदी पापार्त्तसन्तारिणी,
श्रीनारायणपादपङ्कजभवा स्वर्लोकसञ्चारिणी।
उद्धर्तुं भुवमागता भगवती भक्तप्रिया जाह्नवी,
वन्दे तां विधिविष्णुशङ्करनुतां मुक्तिप्रदां मातरम्।। ४ ।।

गङ्गे त्वं मुनिशापदग्धमनुजानुद्धर्त्तुमाप्ता भुवं,
कारुण्यादवतीर्य शङ्करशिरस्तस्मात्पुनर्भूधरम्।
वन्द्यः सोऽद्य भगीरथोऽपि तपसा सम्प्राप्य ते सन्निधिं,
धन्या मर्त्यजना भवन्ति सफलाः स्नात्वा च गङ्गाजले।। ५ ।।

मातस्त्वां प्रणमामि कल्मषहरां दीनार्त्तकष्टापहां,
नानारूपधरां सुधेन्दुधवलां माङ्गल्यपुण्यालयाम्।
लीलालास्यकरीं प्रहर्षजननीं मुक्तिप्रदां मातरं
गङ्गां स्वर्गनदीं पवित्रसरसां संसारशोकापहाम्।। ६।।

गङ्गे! त्वां परिसेवितुं प्रतिदिनं सन्त्यज्य कैलाशकं
काशीवासकृताश्रयस्त्रिनयनः श्रीविश्वनाथः प्रभुः।
काश्यां यस्य नरस्य देहपतनं मुक्तो भवेत् स ध्रुवं
नूनं ते महिमा सदैव कथितो देवैश्च मर्त्यैस्तथा।। ७।।

दिव्यां सितांशुधवलां विमलाम्बुजाक्षीं
भागीरथीं सुरनदीं सततं नमामि।
स्नात्वा सकृत्त्वदमृते सहसा जनास्तु
गच्छन्ति मोक्षपदवीं विमलाः सुखेन।। ८।।

मातश्चारुविचित्रवेशलसितां पुण्यां परां पापहां
दिव्यां रूपधरां सुहासमधुरां स्वर्गापवर्गप्रदाम्।
धन्यास्ते मनुजा भवन्ति भुवने सम्प्राप्य रत्नप्रभां
स्वर्गं यान्ति च पामराः प्रतिदिनं पुण्यात्मनां का कथा।। ९।।

पीत्वा ते जलमाशु याति मनुजो दृष्ट्वा च कश्चिज्जनः
स्नात्वा चापि सुखेन शान्तमनसा तापत्रयाद्रक्षितः।
स्थित्वा चापि तटे तवैव सुखदे ध्यात्वापि मोमुच्यते
वन्दे त्वां करुणामयीं भगवतीं गङ्गे सुतं पाहि माम्।। १०।।

## भगवती–स्तोत्रम्

लीला चित्रा विचित्रा धनसुतवनिताव्याजरूपा च मातः
संसारे मोहसारे मनुजमनुदिनं भ्रामयित्वा महेशि!
नानारत्नं जनेभ्यो वितरसि विभवं स्वेच्छया क्वापि रम्यं
भूयस्तत्रैव मातर्हरसि च तरसा मायया सर्वमेतत्।। १।।

तारे त्वं रौद्ररूपा प्रचुरभयकरी खड्गहस्ता विशेषा
श्यामा कल्याणकर्त्री पृथुतरजठरा तारिणी लोकवन्द्या।
धूमादेवी च पद्मा त्वमसि च बगला भैरवी छिन्नमस्ता
श्रीविद्या त्वं च मातस्त्रिपुरहरवधूस्त्वं च विद्या दशेति।। २।।

त्वं विद्याऽज्ञानहन्त्री त्वमसि सुखकरी श्रीस्त्वमेवासि राधा
नित्यं लक्ष्मी प्रसन्ना विकिरसि सततं सौख्य–सौभाग्य–पुञ्जम्।
माता त्वं प्राणदात्री दनुजकुलहरा भीमरूपा महेशी
मातङ्गी त्वञ्च मातः सुविमलकरुणा त्वं भवानी
भवेऽस्मिन्।। ३।।

मातस्त्वं परिपाहि कल्मषहरे दीनार्त्तदुःखापहे
सौख्यन्ते शुभनाम पावनकरं सर्वत्रदुःखापहम्।
पुत्रेऽस्मिन् कृपया विधेहि करुणां कारुण्यवारांनिधे
सम्प्राप्तस्तव पादपद्मयुगलं भृङ्गायमाणः सुतः।। ४।।

भीमास्ते दशमूर्तयोऽम्ब! सहसा सर्वासु दिक्षु स्थिताः
श्रीशम्भोः भयकारिकाश्च क्रमशो भीमा भयोत्पादिकाः।
नानारूपधरा विशालहृदयाः संहारजालावृताः
दीनान् नः सततं नु पान्तु ललिते ते नैकरूपाश्शिवाः।। ५।।

## श्रीराधा

परामबां श्रीराधां यदुपतिनुतां मङ्गलमयीं,
सदा पूज्यां वन्द्यां सुरमुनिगणैः संस्तुतिमिताम्।
मुदा वृन्दारण्ये मधुरिपुसमेतां भगवतीं
नमामस्तां देवीं परमसुखदां कृष्णवनिताम्।। १।।

## श्रीसीता

धन्या सा धरणीसुता भगवती श्रीजानकी मङ्गला,
या रामं विपिनेऽपि कष्टवलिता नैवात्यजत्सत्पतिम्।
लङ्कायाश्च विनाशिका छलहृता भक्तस्य संरक्षिका
माता सा करुणामयी रघुवरप्रीतिंगता पातु नः।। २।।

## श्रीपद्मावती

दीनोद्धारपरायणा भगवती पद्मावती श्रीयुता
लोकान् त्रातुमवातरच्च भुवने मंगापुरे संस्थिता।
विष्णोः प्राणसमा प्रिया च वनिता श्रीवेङ्कटेशस्य या
सा मां पातु कृपानिधानदयिता लक्ष्मीः सदा सौख्यदा।। ३।।

## अन्नपूर्णा

अन्नं प्राणसमं सुशास्त्रगदितं शून्यं यदन्नं विना,
सौख्यञ्चापि निरर्थकं, नहि धनं, व्यर्थञ्च यज्जीवनम्।
मातान्नैः सकलाः प्रजा वितनुते सौख्यं परं या सदा
सा शम्भोर्दयिता प्रयच्छतु सुखं मातान्नपूर्णेश्वरी।। ४।।

### कामाख्या

यामाराध्य बुधा भवन्ति सुखिनः स्वर्गं गता योगिनः
या शक्तिः सुखदा च योनिवलिता सत्यङ्गरूपा महः।
आसामे प्रथिता क्षितौ सुविदिता कामाख्यदेवी परा
सा नः पातु महेश्वरी भगवती नित्या च सत्या सदा।। ५।।

## श्रीवैष्णवीदेवी

सुरम्ये सुक्षेत्रे वसति जननी जम्मुनगरे
प्रसिद्धे द्वैगर्ते भवति भुवि भक्तार्थसुलभा।
त्रिकूटाख्ये शैले सुललितगुहायां भगवती
सदा शक्तिर्विष्णोरिह तु नगजा नृत्यतितराम्।। १।।

जम्मूतो वसयानमस्ति सुलभं गन्तुं सहर्षं मुहु–
र्गन्तव्यं ''कटरास्थलं'' भगवतीं ध्यात्वा तु होराद्वये।
नीत्वा तत्र निजं प्रवेशजनकं पत्रं ध्रुवं यत्नतः
पद्भ्यां सैन्धवमाश्रिताश्च जननीं प्राप्तुं समर्था जनाः।। २।।

माताजीति समुच्चरन् युवजनो मध्ये कुरङ्गीदृशां,
''जै जै जै' बहुवारमेव सततं सर्वे वदन्तः पथि।
वृद्धा ये लकुटीबलेन गमनं भक्त्या सदा कुर्वते
सुन्दर्यः सुकुमारसंगवलिता भक्तान्विताः कोमलाः।। ३।।

शृङ्गारस्य च भक्तिभावसहितो मार्गे भवत्याश्रयः
यूनां स्कन्धसमाश्रिता युवतयः प्रौढ़ाश्च वृद्धास्तथा।
पीत्वानन्दकरं सुशीतलजलं चोष्णं पयश्चापरे
सानन्दं क्रमशश्चलन्ति पुरुषा नार्यश्च मार्गे मुदा।। ४।।

गन्तव्यं कटरास्थलात्पथि पुनः प्रक्षाल्य पादान् नरैः
स्नात्वा वा शुचयो भवन्ति मनुजास्ते वाणगङ्गाजले।
ये दुष्टा अपि पापिनोऽशुचिरताः किं तत्र पुण्यात्मनो
नूनं यान्ति भवन्ति शुद्धहृदया वाञ्छां लभन्ते सदा।। ५।।

सोपानेन नरोऽथवा समतलप्रान्तेन गन्तुं क्षमाः
सोल्लासं सफला भवन्ति मनुजा ध्यात्वाऽचिरं मातरम्।
कृत्वा ते जलभोजनादिरुचिरं सानन्दमुच्चैः स्वरैः
गायन्तो ''जय वैष्णवीति'' सकला मार्गे चलन्तो जनाः।। ६।।

विद्युज्ज्योतिरुदेति दिव्यमथवा मातुः प्रकाशो भवेत्
सन्ध्यायां प्रतिवासरं सुललितं भव्यं नवीनं महः।
स्वर्लोकेऽपि सुदुर्लभं सुखमिदं प्राप्तुं यतो वर्तते
देवाश्चापि सदा वसन्ति सुखिनः प्राप्य त्रिकुटाचलम्।। ७।।

मातुर्ये पदपादुकां शुभकरीं शान्तिप्रदां कामदां
प्राप्तास्ते सफला भवन्ति मनुजा यत्नं विना सर्वदा।
धन्याश्चापि महीतले सुविदिताः पूज्याः प्रशस्ताः पुनः
वैष्णव्याश्च पदारविन्दयुगलात् मुक्तिं लभन्ते ध्रुवम्।। ८।।

मध्ये चार्धकुमारिकाख्यरुचिरं रम्यं स्थलं पावनं,
प्राप्यात्रैव सुमन्दिराणि भवनान्यन्यानि पण्यानि च।
भुक्त्वान्नं दधि–दुग्ध–भक्ष्य–मधुराण्यन्यानि पेयानि च
विश्रम्यापि नरा विशालभवने शान्तिं लभेरन् निशि।। ९।।

भक्तानां गमने तथागमविधौ या शृङ्खला दृश्यते
मुग्धानां प्रमदाजनस्य बहुधा वृद्धाजनानां पुनः।
तां दृष्ट्वा पुरुषा प्रसन्नहृदया नार्यश्च मोदान्विताः
गच्छन्त्येव जना गिरौ भगवतीं स्मृत्वा तु रात्रिन्दिवम्।। १०।।

यूयं सर्वे वदत मनुजा! देवि! दुर्गे नमस्ते
ऊच्चैरुच्चैर्वदत मुदिता बालिका बालकाश्च।
पृष्ठस्था वा वदत यतयो येऽपि चाग्रेजना वा
मा दुर्गे त्वं जय जय सदा श्रूयते कण्ठघोषः।।११।।

काश्चिद्वृद्धा गलितदशना ध्यानमग्नाश्च भक्त्या
काश्चिच्चान्या सुपलितकचाः सस्वरं गीतमेव।
गायन्त्यत्र प्रबलतरसा मातुरेव स्तुतिं ते,
केषां नृणां मनसि न भवेद् भक्तिभावस्य धारा।।१२।।

मार्गे काचित्पतति सहसा धर्तुकामोऽस्ति कश्चित्
काचिद्वनिता धरति सरला कामिनी कान्तदेहम्।
काचिन्मुग्धा कमलवदना वीक्ष्य शैलस्य दृश्यं
विश्रान्तापि प्रचलति पुनः भक्तिभावेन युक्ता।।१३।।

भक्ताः केचिद्विदधति मुहुर्भक्तिभावं जनन्याः
केचिच्चान्ये ददति सहसा स्वं सहायं परेभ्यः।
मार्गे केचिज्जलमपि कदाप्येव नैवं च पीत्वा
धृत्वा धैर्यं नगपतिसुतां मातरं तां स्मरन्ति।।१४।।

जीर्णा वृद्धा स्मरति जननीं दोलिकावाहनस्था,
खञ्जः कुब्जो विधिहतजनाः पामरा दीनहीनाः।
सन्तश्चान्ये ''जय जय युतां'' मातरं तां स्मरन्तः
कष्टान्मुक्ताः कलिकलुषतो यान्ति पारं भवाब्धेः।।१५।।

हस्त्याकारं शिखरमचलं प्राप्य नूनं प्रसन्नाः
श्रान्ताः सन्तो भगवति मनो यत्नपूर्वं निधाय।
क्रोशं गत्वा सुखदभवनं दृष्टिलभ्यं सुरम्यं,
साक्षीभूता भवति जननी साँझिक्षेत्रात्सहाया।।१६।।

देव्यास्तीर्थाद्भवति कटरा पञ्चक्रोशात्मिकैव
मन्दं मन्दं चल जन! पुनः धामरत्नं परीयाः।
सामान्यानां सुलभगमनं सार्द्धहोरात्रयेण
गन्तव्यं ते पथि नर! सदा तीर्थमेवं सुखेन।।१७।।

वैष्णव्याः शुभधाम भव्यरुचिरं स्वर्गास्पदं सुन्दरं
शीतं स्वादु जलं च यत्र सुलभं देव्याः स्थले प्राप्यते।
दिव्याः पुण्ययुताश्च सन्ति विविधा देवगृहाः सौख्यदा
यत्रैषा जननी  गुहागृहभवा श्रीवैष्णवी राजते।।१८।।

स्नात्वा श्रोतसि मानवैर्हिमजलैर्प्रक्षाल्य मार्गश्रमं,
ध्येयं मातृपदारविन्दयुगलं स्थित्वा च पङ्क्तौ पुनः।
द्वारं प्राप्य गुहां प्रविश्य तरसा श्रीवैष्णवीसन्निधौ,
भक्त्या दर्शनमेव कार्यमचिरं श्रेयश्च लभ्यं बुधैः।।१९।।

महाकाली दुर्गा सततमनुकूलं प्रकुरुते
महालक्ष्मीश्चाद्या विभवमतिशीघ्रं वितनुते।
सदा वीणापाणिः प्रचुरशुभविद्या भगवती
त्रिदेवी पिण्डस्था किरतु सुखपुञ्जं ''दिशि दिशि''।।२०।।

मध्ये गुहाया जगदम्बिकायाः सिंहस्य चिह्नं शुभदं करस्य।
श्रीशम्भुदेवस्य च दिव्यमूर्तिं दृष्ट्वा प्रहृष्टा मनुजा
भवन्ति।।२१।।

अवतु सकलदीनान् भक्तियुक्ताञ्च काली
धन–जन–सुखपूर्णान् नः  प्रकुर्याच्च लक्ष्मीः।
वितरतु शुभविद्यां शारदा ज्ञानमाता

भवतु सुखदमूर्तिर्वैष्णवी पिण्डरूपा।। २२।।

कृत्वा भवान्याः शिरसा प्रणामं
समर्च्य पिण्डस्थमहश्च दिव्यम्।
समर्प्य देव्यै फलपुष्पधूपान्
प्राप्य प्रसादं सुखिनो नराः स्युः।। २३।।

महाकालः शंभुर्विलसति गिरौ शैलशिखरे
ध्रुवं द्रष्टव्योऽयं भवभयहरो भैरव इति।
त्रिकूटे देवानां भवति सुखदं दर्शनमहो
पलायन्ते पीडा विविधभवबाधाः किल यतः।। २४।।

धनजनसुखपूर्णान् वैष्णवी लोकमाता
विविधशुभसुयोगान् शङ्करी नः प्रकुर्यात्।
वितरतु सुखशान्तिं सर्वकल्याणमूर्तिः
किरतु विविधमोदं श्रीशिवा नः प्रसन्ना।। २५।।

मातरं वैष्णवीं नत्वा भैरवञ्च ततः परम्।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।। २६।।

महाशक्तिं नत्वा जनिमृतिजरातापशमनीं
विवेकग्रन्थेऽस्मिन् सकलसुखदं भक्तिजनकम्।
सुगीतं सर्वेषां जगति चिरशान्त्यै जनिभृता—
मुमानाथेनेदं व्यरचि रुचिरं शक्तिशतकम्।। २७।।

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य—विद्यावाचस्पति डा. उमारमणझाशर्मविरचितायां विवेकसहस्र्यां श्रीशक्तिशतकं सम्पूर्णम्।

# २. श्रीविष्णुशतकम्



मीनः कूर्मो वराहो नरहरिवदनो वामनो विश्ववन्द्यो
रामो रामश्च कृष्णः सुगत इति पुनः कल्किरूपो वरेण्यः।
विष्णुर्नानावतारो दनुजकलरिपुधर्मसंस्थापको यः
पायादस्मानपायात् धृतदशतनुभिः सर्वदा माधवः सः।।

— उमारमण झा

## श्रीविष्णुः

जगतस्थावराणां त्वमेवासि कर्त्ता
जगत्पालाको विष्णुरूपस्त्वमेव।
भवेशो महेशो विभुर्विश्वहर्त्ता,
त्रिरूपाय तुभ्यं नमस्ते नमस्ते।। १ ।।

गुरूणां गुरुस्त्वं विभुर्विश्वरूपः
अणीयान् अणोस्त्वं सुपूज्यो जगत्याम्।
सुसूक्ष्मो गरिष्ठो महात्मा त्वमेव
न शक्तो बुधोऽपि स्वरूपञ्च वेत्तुम्।। २ ।।

गुणानां निधानं सुखानां प्रदाता,
शरण्यो जनानां त्वमेवासि विष्णो।
न जाने स्वरूपं प्रभो! ज्ञानमूर्ते!
गुणागार! संसारसारस्त्वमेव।। ३ ।।

पृथिव्यां त्वदीया विचित्रास्ति शक्तिः तथा स्वर्गलोके च पातालमध्ये।
विधात्री च हन्त्री च माया त्वदीया, प्रभो! नैव जाने त्वदीयं स्वरूपम्।। ४ ।।

त्वमेवासि सर्वत्र जीवांशरूपो जले चानले भूतले व्याप्तदेवः।
त्वमेवासि धर्त्ता शरण्यः समेषां विभो! विष्णुरूपो वरिष्ठस्त्वमेव।। ५ ।।

सतां सर्वदो भुक्तिमुक्ति—प्रदाता फलं दातुमीशश्च कर्मानुसारम्।
जराजन्मदुःखौघहर्त्ता प्रभुस्त्वं दयादृष्टिकर्त्ता भवाब्धौ जगत्याम्।। ६ ।।

प्रभो! ते नमांसि स्वरूपाय विष्णोः, प्रभो! ते नमांसि स्वरूपाय शंभोः।
विधेश्चापि रूपाय तुभ्यं सदैव, त्रिरूपाय देवाय विष्णो! नमस्ते।। ७ ।।

# श्रीविष्णु–स्तुतिः

दशावतारान् परिकल्प्य यः प्रभुः विनाशयन् यो विविधान् दुरात्मनः।
संरक्ष्य धर्मं भुवि साधुमण्डलं राराजते विश्वविदव्ययो विभुः।। १ ।।

भजन्ति केचिन्नवनीरदोज्ज्वलं परं चिदानन्दमयं गुणाकरम्।
अनेकगोपीकृतभूरिपूजनं श्रीकृष्णदेवं पुरुषोत्तमं हरिम्।। २ ।।

कर्त्ता प्रपञ्चस्य विरञ्चिरूपधृक् विष्णुः स देवो परिपालको हरिः।
संहारको यः शितिकण्ठनामकः पायात्त्रिदेवो भुवनैकवन्दितः।। ३ ।।

सुरासुरेन्द्रा दनुजाधिपास्तथा ध्यायन्त एवं मुनयोऽपि यत्नतः।
पारं न यान्ति प्रभुताधिपस्य च श्रेयस्करन्तं शरणागतोऽस्मि।। ४ ।।

संसेव्य सिद्धा अमराश्च मानवाः निरस्य मायां भवबन्धदायिनीम्।
ब्रह्मस्वरूपाः प्रभजन्ति भक्तितः ज्ञात्वाऽमृतं तत्त्वमिदं सुखावहम्।। ५ ।।

यस्मिन् दृढाभ्यासवशेन साधकः स्थित्वा हरौ पश्यति निर्मलं स्वकम्।
मुक्त्वा स्वकीयान् जटिलान् हृदि स्थितान् ग्रन्थिप्रभेदान् मनुजो विमुच्यते।। ६ ।।

यं देवदेवं मनसाप्यगोचरं वाचः परं नित्यमनन्तनामकम्।
भजन्ति यत्नैर्यतयो यमीश्वरं तं नौमि देवं पुरुषोत्तमं हरिम्।। ७ ।।

## श्रीरामस्तुति—पञ्चविंशतिका

मर्यादापुरुषोत्तमो रघुवरो लोकभिरामश्च यो,
लोकानामनुरञ्जनाय भगवान् सन्त्यज्य जायां प्रियाम्।
सौख्यञ्चापि समत्यजत्प्रभुवरः पातुं समस्ताः प्रजाः
श्रीरामो जगदीश्वरः स सततं पायादपायात्प्रभुः।। १ ।।

श्रीरामं भरताग्रजं सुरवरं सम्पूजितं श्रीयुतं
विष्णु—ब्रह्म महेश्वरैः सुरगणैः सम्मानितं सादरम्।
साधूनामुपकारकं मनिवरैर्ज्ञेयं परं पावनं
वन्दे श्रीकरुणाकरं प्रभुवरं सीतापतिं राघवम्।। २ ।।

सच्चिद्रूपमयो विभू रघुवरश्चानन्दरूपश्च यो
नित्यज्ञानयुतो विचारनिपुणो वेदान्तविद्यो बुधः।
ईशः श्रीपुरुषोत्तमः शिवमयः संहारसृष्टिक्षमः
श्रीरामो भगवान् प्रभाववलितोऽपायात्स पायात्सदा।। ३ ।।

भूतेशं परितोष्य घोरतपसा सम्प्राप्य शार्वं वरं
नानाशास्त्रकलाविचारणरणः श्रीरावणो रावणः।
सीतां तां जनकात्मजां सुरुचिरां श्रीरामभार्याञ्छलाद्
हत्वा यो भरताग्रजस्य नचिरात् दण्डस्य पात्रं गतः।। ४ ।।

रामं भीमपराक्रमं नृपवरं सीतापतिं सुन्दरं
श्रीमन्मारुतिवन्दितांघ्रियुगलं सर्वार्थसिद्धिप्रदम्।
भक्तानामभयङ्करं प्रतिपदं ज्ञानाकरं कीर्तिदं,
श्रीसौख्यादिविवर्धकं प्रभुवरं श्रीरामचन्द्रं भजे।। ५ ।।

श्रीरामो नरसिंह एव यदयं रक्षोगणस्यान्तकः
कौशल्यासुत आदिदेव इति यः संस्तूयते सादरम्।
धृष्टं बालिनमाहवे रघुपतिर्हत्वा च दुष्टन्तथा
सुग्रीवाय सहायकः समभवद् राज्यप्रदानात्ततः।। ७।।

विश्वामित्रदिशा जघान सहसा यज्ञस्य विध्वंसकान्
स्पृष्ट्वा पादतलेन गौतममुनेः पत्नीमहल्यां पुनः।
पाषाणादकरोत्प्रभुः करुणया सद्यः सतीं मानुषीं
शम्भोः कार्मुकभञ्जनेन तरसा श्रीजानकीं प्राप्तवान्।। ८।।

त्यक्त्वा राज्यमसौ जगाम विपिनं ताताज्ञया सादरं
गत्वा घोरवनं निहत्य शतशो रक्षोगणं कण्टकम्।
दीनानामुपकारको रघुवरो मायापतिः श्रीहरिः
भक्तानामभयङ्करो मुनिवरैरासेवितः पातु नः।। ९।।

हत्वाऽयं खरदूषणत्रिशिरसो रक्षोगणं कोटिशः
त्रातुं साधुजनं स्वयं मधुरिपुर्योऽवातरद्भूतले।
श्रीरामो जनकात्मजाप्रियतमो मूर्तिर्विवेकस्य यः
पायान्नः करुणामयः स पुरुषः श्रीराघवः सर्वथा।। १०।।

रामानन्दनयप्रवर्तकबुधो ज्ञानाग्रगण्यस्सदा
सत्यं ज्ञानमनन्तमेव कथितं ब्रह्मेति वेदान्तिभिः।
नानारूपधरो हरिः प्रभुवरो वीराग्रगण्यस्तथा
व्याख्यातो ननु नेति नेतिवचनैः वेदान्तवाक्यैश्च यः।। ११।।

वन्द्यो यो धरणीतले प्रभुवरश्चास्ते गुरुणां गुरुः
पूज्यः श्रीरघुनन्दनो रविकुलालङ्कारभूतः सुरः।
धन्यो मारुतिपूज्यपादयुगलः साक्षात्प्रभू राघवः
पायान्नः स चराचरस्य भयतो रामो जगद्रक्षकः।। १२।।

पूज्यो दाशरथिः प्रसन्नवदनो भक्तप्रियो राघवः
देवो दुष्टविनाशकः सुरवरैर्पूज्यश्च वन्द्यस्सदा।
दीनानां करुणाकरो मधुरिपुः भूपालचूड़ामणिः
श्रीरामो भरताग्रजः प्रभुवरः पायाच्चिरं नो विभुः।।१३।।

बाल्ये चापि भृशं कृतं जनहितं नूनं सदा लीलया
कौशल्यातनुजेन येन निहताः रक्षोगणाः कोटिशः।
विश्वामित्रसहायकः प्रभुवरः सर्वस्य संरक्षकः
रामस्सोऽस्ति गुणालयो रघुपतिः पापात्मनां मोक्षदः।।१४।।

सुग्रीवादिसहायको गुणनिधिः श्रीजानकीवल्लभः
श्रीमन्मारुतिपूज्यदेवचरणो लङ्कापतेर्नाशकः।
पायान्नः परमात्मरूपविबुधो रामो जगद्रक्षकः
श्री विश्वेश्वर एष एव सततं त्रातुं समर्थो हरिः।।१५।।

श्रीरामं पुरुषोत्ततं रघुपतिं सीतापतिं राघवं,
श्यामाङ्गं शशिकोटिपूर्णवदनं कारुण्यरत्नाकरम्।
कौशल्यासुखवर्द्धनं सुरवरं काकुत्स्थवंशोद्भवं
वन्देऽहं जगदेकवीरमनिशं सीतामनोरञ्जकम्।।१६।।

श्रीरामं भरताग्रजं सुरवरं क्षोणीतनूजायुतं
सौम्यं सत्त्वगुणोत्तमं रघुवरं स्मेराननं श्यामलम्।
त्रातारं भवबन्धनान्मधुरिपुं पूज्यं सतां पालकं,
वैदेहीनयनारविन्दमिहिरं श्रीरामचन्द्रं भजे।।१७।।

श्रीरामः परमेश्वरो मम पिता माता च मे जानकी,
भ्राता केसरिपुत्र एव सदयः मित्रं जटायुर्मम।
विश्वामित्रविभीषणादिसुधियो मे सन्तु ते बान्धवाः,
भूयान्मे चिरभक्तिरेव सुखदा रामस्य पादे ध्रुवम्।।१८।।

श्रीरामं हितकारिणं गुणनिधिं कारुण्यरत्नाकरं,
नानारत्नविभूषिताङ्गललितं सौन्दर्यसारं हरिम्।
कौशल्यातनयं महर्षिमुनिभिः संस्तूयमानं विभुं
संसारार्णवतारकं रघुवरं श्रीराघवं संभजे।।१९।।

श्रीदेवं जगदीश्वरं जनकजाजानिं जनानन्दनं
श्रीरामं रघुनायकं गुणनिधिं सीताप्रियं सुन्दरम्।
वीरश्रेष्ठमनङ्गरूपमनिशं श्रीविष्णुमन्तर्भजे
ध्यानेनामितशौर्यवीर्यवलितं श्रीरामचन्द्रं प्रियम्।। २०।।

श्रीरामः जगदीश्वरो मम गुरुः सीता च मे देवता
भ्राता त्वञ्जनिपुत्र एव विबुधो वीराग्रगण्यः कपिः।
शत्रुघ्नो भरतश्च लक्ष्मणवरो मित्राणि नः सर्वदा,
पान्तु, श्रीहरिभक्तिरेव हृदये स्यात्प्रार्थये हे प्रभो।। २१।।

श्रीरामं भरताग्रजं सुनयनं सीतापतिं सुन्दरं
काकुत्स्थं करुणाकरं गुणनिधिं दुष्टान्तकं राघवम्।
आर्ताणामभयङ्करं प्रतिपदं मायापतिं श्रीपतिं
वन्देऽहं रघुनायकं प्रभुवरं रात्रिंचरध्वंसिनम्।। २२।।

श्रीरामं हितकारिणं रघुवरं भक्तप्रियं सादर
वैदेहीनयनारविन्दमिहिरं सुग्रीवसंरक्षकम्।
दुष्टव्यालकुलाभिमानगरुड़ं रक्षोगणस्यान्तकं
वन्दे श्रीजगदीश्वरं प्रभुवरं श्रीजानकीवल्लभ्।। २३।।

रामे तिष्ठति रक्षणाय सुखदे व्यर्थं भजेऽन्यं सुरं
रामे भक्तिरचञ्चला यदि भवेद्, ध्येयो न चान्यः पुनः।
रामे चित्तलयः सदा यदि पुनः चान्ये किमर्थं प्रियाः
एकस्मिन् करुणाकरे रघुवरे न्यस्तं समस्तं यतः।। २४।।

श्रीरामः शरणं समस्तजगतां श्रीराममाराधये,
रामेणैव हि रक्षितं ज़गदिदं रामाय भक्त्या नमः।
रामान्नास्ति परः प्रभुस्त्रिभुवने रामस्य दासोऽस्म्यहं
रामे चास्तु रतिः सदा सुविमला, भो राम! पश्याधुना।। २५।।

रामाय पूज्यदेवाय पंचविंशतिपुष्पकैः।
भक्त्या ग्रथितसन्माल्यं विप्रेणाद्य समर्प्यते।। २६।।

## श्रीगुरुपवनपुरेशाष्टकम् (गुरुवायूरपुरेशाष्टकम्)

विराजमानो जगतां निदानं,
सतां शरण्यो भुवि कीर्तनीयः।
गुरोश्च वायोश्च विशिष्टपुर्यां,
नारायणो भक्तपरायणश्च।। १ ।।

समागतो यः फणिराजतल्पात्,
समाश्रितः सागरतीरदेशम्।
विभाति कान्त्या सह सिन्धुपुत्र्या,
पीताम्बरोऽयं भुवि दीनबन्धुः।। २।।

यस्याननं पद्ममिव प्रफुल्लं,
दन्ताः शुभाः दाडिमबीजतुल्याः।
यस्योत्तमाङ्गे घनकेशपाशे
विराजते हेममयः किरीटः।। ३।।

पदे यदीये सुनृणां मनांसि
लक्ष्म्याः करेणानिशलाल्यमाने
विहाय सर्वान् विषयान् निवास—
मुशन्ति हंसा इव शारदाब्जे।। ४।।

बुधैरशेषैरभिवन्द्यमानं
शेषे शयानं तमशेषनाथम्।
तमीश्वरं विश्वजनार्तिनाशं
पार्थस्य मित्रं शरणं प्रपद्ये।। ५।।

निदानभूताय जगत्त्रयस्य
नमोऽस्त्वनन्ताय जगत्पते! ते।
स्वलीलया मोहयसे च सर्वान्
शरीरभाजो भवसिन्धुमग्नान्।। ६।।

सृजन् प्रपञ्चं परिपालयंश्च
विनाशयन् त्वं निजमाययेदम्।
नटो यथा खेलति वीतसङ्गः
श्रीमान् तथैवं जगतीतलेऽस्मिन्।। ७।।

यत्सेवया कोऽपि पुनः शरीरी
न जातु मातुर्जठरे प्रयाति।
मुदा परब्रह्मणि लीयतेऽसौ
कृपाकटाक्षेण तवैव नाथ।। ८।।

अपारसंसारसमुद्रमग्नान्
जनान् त्वदीयः सदयः कटाक्षः।
तरीव पारं, नयते हि दीनान्,
नमः परस्मै पुरुषोत्तमाय।। ९।।

# गुरुपवनपुरेशाष्टकम्

गुरुपवनपुरेशो देवदेवो मुरारि–
निजजनसुखदाता कृष्णरूपो मुकुन्दः।
किरतु विविधसौख्यं मङ्गलानाञ्च कर्त्ता,
हरतु सकलदुःखं वासुदेवः प्रसन्नः।। १।।

गुरुपवनपुरेशं सर्वसौख्यप्रदन्तं,
भवभयपरिहारं लोकनाथं महेशम्।
सुरवरमुनिपूज्यं श्रीरमाकान्तमीड्यं
सकलभुवनतेजोरूपदेवं प्रणौमि।। २।।

गुरुपवनपुरेशेनैव विश्वं समस्तं,
त्रिभुवनपतिनाथेनैव कार्यं विचित्रम्।
निखिलभुवनकर्त्रा विश्वमात्रस्य भर्त्रा,
इह भुवि जनरक्षा क्रियते तेन नूनम्।। ३।।

विविधदनुजहर्त्रे सृष्टिसंहारकर्त्रे,
भुवि सकलविधात्रे नित्यशो विश्वभर्त्रे।
सुखमयशुभदात्रे लोकनाथाय तुभ्यं
मम परिहृतचेतःकायवाग्भिर्नमोऽस्तु।। ४।।

गुरुपवनपुरेशान्नास्ति देवो विशिष्ट–
स्त्रिभुवनपतिनाथान्नास्ति सारो जगत्याम्।
विविध सुखदलीलालास्यहासादुपेन्द्राद्,
व्रजतु नहि मनो मे दूरदेशं कथंचित्।। ५।।

गुरुपवनपुरेशस्यास्मि दासो नतोऽहं
सकलभुवननाथस्यैव रागो विशुद्धः।
सुरवरमुनिपूज्यस्यैव भक्तिः सदैव,
भवतु भवतु चित्ते देवदेवानुरक्तिः।। ६।।

गुरुपवनपुरेशे सच्चिदानन्दमूर्त्तौ,
प्रभुवरबुधदेवे सर्वदा मेऽस्तु ध्यानम्।
विभुवरगणनाथे नाथनाथे सदाऽस्तु
मम विमलविशोके चित्तमध्येऽनुरक्तिः।। ७।।

किर किर शुभ सौख्यं देवदेवाधि देव!
हर हर मम बाधाः राधिकानाथ! कृष्ण।
गुरुपवनपुरेश! त्राहि मां लोकनाथ!
भवभचपरिहार! त्वां प्रपन्नोऽस्मि विष्णो।। ८।।

# श्रीवेङ्कटेशं शरणं प्रपद्ये

दीनार्त्तदुःखं भवरोगमूलं
पापानि भक्तस्य करोति नाशम्।
तं देवदेवं भुवनेषु वन्द्यं
श्रीवेङ्कटेशं सततं प्रपद्ये॥ १॥

पद्मावतीशं परमं परेशं
भक्तप्रियं भव्यमनन्तरूपम्।
शेषाद्रिशैले तु सदा वसन्तं
श्रीवेङ्कटेशं शरणं प्रपद्ये॥ २॥

पीताम्बरं लोकपतिं रमेशं
विश्वेशवन्द्यं भुवि कीर्तनीयम्।
मधुद्विषं नौमि च माधवन्तं
श्रीवेङ्कटेशं शरणं प्रपद्ये॥ ३॥

रामप्रियं रामपथे प्रवृत्तं
राधाप्रियं राक्षसनाशकन्तम्।
गोपीजनानां च दुकूलचौरं
श्रीवेङ्कटेशं शरणं प्रपद्ये॥ ४॥

सौख्यप्रदं सुन्दरशान्तरूपं
तं सच्चिदानन्दमनन्तमीड्यम्।
विष्णुं मुरारिं भवतापहारं
श्रीवेङ्कटेशं शरणं प्रपद्ये॥ ५॥

पञ्चश्लोकमितं स्तोत्रं श्रीकृष्णाय समर्प्यते।
भक्त्या ग्रथितसन्माल्यमुमारमणशर्मणा॥ ६॥

# कलौ वेङ्कटनायकः

सत्ये विष्णुः सदा त्राता त्रेतायां राघवो नृपः।
द्वापरे द्वारकाधीशः कलौ वेङ्कटनायकः।। १ ।।

ईशः प्रभुः स्वयं साक्षात्स्वर्गादागत्य राजते।
शेषाद्रौ वसुधामध्ये कलौ वेङ्कटनाकः।। २ ।।

पद्मावतीशरूपेण जगदीशो जनार्दनः।
दीनार्त्तान् पाति विशोशः कलौ वेङ्कटनायकः।। ३ ।।

बालाजीति सुविख्यातस्तिरुमल्लागिरौ स्थितः।
रक्षको राजते नित्यं कलौ वेङ्कटनायकः।। ४ ।।

भूदेवी यस्य पूजार्थं श्रीदेवी चापि सेविका।
देवः सोऽद्य सदा पातु कलौ वेङ्कटनायकः।। ५ ।।

विश्वम्भरो जगन्नाथो हृषीकेशो हरिः स्वयम्।
लोकत्राणसमर्थोऽयं कलौ वेङ्कटनायकः।। ६ ।।

बकासुरस्य हन्तासौ पूतनापूतको विभुः।
अघासुरादिहन्ता च कलौ वेङ्कटनायकः।। ७ ।।

गजस्य जगतस्त्राता ग्राहात्साक्षाज्जनार्दनः।
शेषाचले वसन् नित्यं कलौ वेङ्कटनायकः।। ८ ।।

दीनान् पातु सदाऽपायात् पायाद्भक्तांश्च पापतः।
विश्वेश्वरो जगन्नाथः कलौ वेङ्कटनायकः।। ९ ।।

गोविन्दो माधवो वन्द्यो मुरारिर्मधुसूदनः।
शेषाद्रौ रमते सोऽद्य कलौ वेङ्कटनायकः।। १० ।।

पुत्रान् पौत्रान् धनं लक्ष्मीं सौख्यं कामांश्च सर्वदा।
ददाति माधव: प्रीत: कलौ वेङ्कटनायक:।।११।।

वेंङ्कटेश! नमस्तुभ्यं त्वमेव शरणं मम।
उमारमणविप्रस्य कलौ वेङ्कटनायक:।।१२।।

## श्रीवेङ्कटेश—स्तोत्रम्

श्रीवेङ्कटेशं करुणासमुद्रं
देवाधिदेवं धृतपीतवस्त्रम्।
शेषाद्रिशैले तु मुदा रमन्तं
नमामि विष्णुं भवतारकन्तम्।।१।।

सदैव पद्माकरपद्मलालितं
सुवादयन्तं मुरलीं मनोहराम्।
सुरेश्वरं वेंङ्कटनायकं परं
नमामि विष्णुं भवमोक्षदायकम्।। २।।

ईशानां परमेश्वरस्त्रिभुवने ब्रह्माण्डभाण्डोदरे
त्रातुं लोकमवातरच्च भुवने वाराहरूप: प्रभु:।
श्री—भू—सेवित—दीन—भक्तसुलभो देव: कलौ नायक:
श्रीशेषाद्रिपतिश्चराचरपति: पायाच्चिरं केशव:।। ३।।

पूज्यौ श्रीकपिनायकेन निरतं श्रीगौतमीतारकौ
श्रीराधास्मृतिसत्कृतौ सुललितौ पद्मावतीवन्दितौ।
साधूनामनुरञ्जकौ च रजसा चोद्धारकौ दुष्कृतां
पुण्यौ श्रीमधुसूदनस्य चरणौ पातां चिरं नो ध्रुवम्।। ४।।

पद्मावती विष्णुहृदि प्रसक्ता
पायाज्जनानां हृदयं पुनाना।
मातेव या लोकहितैकलक्ष्या
सा सुन्दरी पातु सदार्त्तदीनान्।। ५।।

## श्रीवेङ्कटेश—स्तोत्रम्

श्रीकृष्णं जगदीश्वरं मुरहरं भक्तप्रियं माधवं,
लोकानां हितकारकं सुरवरैरासेव्यमानं मुहुः।
श्रीराधात्मविनोदनोदभवनं ब्रह्मस्वरूपं महः
वन्दे वेङ्कटनाथमेव सततं दीनावलम्बं हरिम्।। १।।

तिरुपतिपुरनाथो लोकनाथो रमेशः
सुरमुनिवरपूज्यो वेङ्कटेशो दयालुः।
हरति सकलचित्तं मोहयन्त्रेण विश्वं
स किरतु सुखपुञ्जं मोक्षशान्तिस्वरूपम्।। २।।

पद्मावतीशं करुणाकरन्तं सन्मानसे शेषगिरौ वसन्तम्।
सौख्यप्रदं ज्ञानमनन्तरूपं श्रीवेङ्कटेशं शरणं प्रपद्ये।। ३।।

श्रीदेवदेवं जगदीशमीड्यं भक्तार्तिशोकानलतीर्थकुण्डम्।
कंसादिदुष्टद्रुमभञ्जकन्तं वन्दे मुकुन्दं सुखदं परेशम्।। ४।।

सप्ताचलस्योपरि भासमानं लक्ष्मीपतिं सौख्यविबर्धकन्तम्।
पुत्रप्रदन्तं भुवि पुण्यपुञ्जं नौमि प्रभुं श्रीकलिकालनाथम्।। ५।।

पञ्चश्लोकमयं स्तोत्रं वेङ्कटेशप्रभोरिदम्।
भक्त्या समर्प्यते तस्मा उमारमणशर्मणा।। ६।।

# श्रीकृष्णपञ्चकम्

सदैव देवमर्चितं सुपूज्यदेवकी सुतं
विदग्धमुग्धमाधवं रमाधवं मनोहरम्।
स्वभक्तपक्षरक्षकं सुधर्मकार्यदक्षकं
त्रिलोकशोकनाशकं नमामि नन्दनन्दनम्।। १।।

सुपात्रपार्थमानदं सुशान्तिदूतकेशवं,
सुचारुचीरवर्द्धनं कुशासनप्रभञ्जनम्।
भवप्रवाहखण्डनं शिखण्डिपिच्छमण्डनं,
वरिष्ठकंसघातकमहो नुमो नुमो वयम्।। २।।

सुरारिदर्पभञ्जकं स्वरक्तभक्तरञ्जकं
कृपाकरं गुणाकरं सुभुक्ति—मुक्ति—दायकम्।
समस्त विश्ववन्दितं बलानुजं सुकोमलं
रमेश्वरं गुणेश्वरं सुरेश्वरं प्रभुं नुमः।। ३।।

भवार्त्तभक्ततारकं सुकर्मधर्मरक्षकं
त्रितापमूलनाशकं प्रतापशक्तिधारकम्।
विशुद्धबुद्धिवर्द्धनं प्रदुष्टदैत्यमर्दनं
सुवंशवेणुवादने विदग्धमाधवं भजे।। ४।।

विचित्रकुञ्जशोभनं स्वभक्तचित्तमोहनं
कलाकलापवेदिनं ललामलास्यकोविदम्।
सुगोपबालशोभितं यशोदया प्रलोभितं
सुरार्चितं सुमङ्गलं सुदर्शनं हरिं भजे।। ५।।

श्रीकृष्णपञ्चकं दिव्यं श्रीकृष्णाय समर्प्यते।
भक्त्या ग्रथितसन्माल्यमुमारमणशर्मणा।। ६।।

## श्रीवेङ्कटेश–स्तुतिः

दिव्यं नीलतनुं मनोहररुचिं सत्यं चिदानन्दकं
गोविन्दं परमात्मरूपमखिलं पूर्णेन्दुरत्नप्रभम्।
गोपीनामनुरागकुंकुमरसेनारक्तवक्षःस्थलं
वन्दे तं करुणाकरं प्रभुवरं शेषाचलस्थं सुरम्।। १।।

श्रीकान्तं परमेश्वरं यदुपतिं मायापतिं श्रीपतिं
भक्तानन्दकरं प्रभुं सुरवरं पीताम्बरं सुन्दरम्।
श्यामं कौस्तुभभूषणं गुणमयं श्रीराधिकावल्लभं
वन्दे तं मुरलीधरं मुरहरं पद्मावतीशं सदा।। २।।

दीनानां शरणं सदैव सुखदं वृन्दावनोल्लासकं
कालिन्दीपुलिनेश्वरं प्रभुवरं संसारलीलाकरम्।
भक्तानामभयप्रदाननिरतं कंसादिदुष्टान्तकं
वन्दे तं परमेश्वरं सुललितं श्रीवेङ्कटेशं बुधम्।। ३।।

वैकुण्ठनाथं भुवनैकवन्द्यं
श्रियःपतिन्तं जगदीशमीड्यम्।
लोकाभिरामं शरणं जनानां
नतोऽस्मि देवं पुरुषोत्तमं विभुम्।। ४।।

गोविन्दं जगतां पतिं सुरगणैरासेवितं सर्वदा
श्रीराधाललिताङ्गवेष्टनपरं शेषाचलेशं कलौ।
विभ्राणं नवभूषणं सुरुचिरं कारुण्यरत्नाकरं
वन्देऽहं वरदायकं प्रभुवरं शेषाद्रिनाथं विभुम्।। ५।।

लीलां स्मृत्वा व्यतीतां मधुरसयुतां राधिकावल्लभः किं,
त्यक्त्वा राधाञ्च गोपीः मधुरमुरलिकाञ्चाथ वृन्दावनेशः।
सम्प्राप्तः शैलमुच्चैः पुनरिह स कलौ दीनबन्धुर्दयालुः
शेषाद्रौ पीतवासा जलधररुचिरो वेङ्कटेशो मुरारिः।। ६।।

श्रीमन्!नाथ! नमोऽस्तु ते भगवते विश्वैकपूर्णात्मने,
जाने नैव तवार्चनादिकविधिं श्रद्धाविहीनो यतः।
ज्ञात्वा पापमतिं सुकर्मरहितं भक्तौ विरक्तं चिरं
दीनं पाहि विभो! न मेऽस्ति शरणं चान्तेऽधुना त्वां विना।। ७।।

## श्रीवेङ्कटेश–स्तोत्रम्

कन्दर्पो विदितः क्षितौ रतिपतिर्ज्योतिष्पतिश्चन्द्रमा,
कंसारिर्विदितो हरिर्यदुपती रक्षःपती रावणः।
मान्यः श्रीकुसुमाकरो हि विदितः काव्ये ऋतूनां पतिः
श्रीशेषाद्रिपतिश्चराचरपतिः मान्यः पतीनां पतिः।। १।।

विष्णुर्लोकपतिर्भवः पशुपतिः शक्रः सुराणां पतिः
ब्रह्मा वेदपतिर्प्रभू रघुपतिः कृष्णस्तु राधापतिः।
अम्भोधिः सरितां पतिर्जलपतिः सूर्यो ग्रहाणां पतिः
दीनानां तु पतिश्चराचरपतिः श्री वेङ्कटेशः क्षितौ।। २।।

इन्द्रो योऽस्ति शचीपतिर्नरपतिश्चासीद् दिलीपः प्रभुः
विख्यातो भुवने सदा कुलपतिर्यो विश्वविद्यालये।
विघ्नानां तु विनाशको गणपतिस्तारापतिश्चन्द्रमा
भक्तानां तु पतिर्भुवि कलौ शेषाद्रिशैले स्थितः।। ३।।

भूमौ लक्षपतिः सदैव धनिकः कोटिष्पतिश्चापि यः,
नाके देवपतिः सुरेन्द्र इति यः ख्यातः सदा पूज्यते।
धन्यो नागपतिः सहस्रवदनः पाताललोके सदा
पूज्यः श्रीपतिमाधवो विजयते शेषाचलस्थो विभुः।। ४।।

मर्यादापुरुषोत्तमो रघुपतिः सीतापती राघवः
विष्णुर्यो मधुसूदनो भवपतिर्लक्ष्मीपतिः केशवः।
वृन्दारण्यविहारिलालरसिको वृन्दापतिर्माधवः
सोऽयं लोकपतिः सदा विजयते श्रीवेङ्कटेशः क्षितौ।। ५।।

शास्त्राणां सुविचारकोऽस्ति विदितो वाचस्पतिः पण्डितः
कैलाशः प्रथितः क्षितौ नगपतिः शम्भुः पुनस्तत्पतिः।
ऐश्वर्यस्य कुबेर इत्यधिपतिः विद्यापतिः सत्यकः
सर्वेषां तु पतिश्चराचरपतिः श्रीवेङ्कटेशः प्रभुः।। ५।।

केचिद्भूमिपतिं नमन्ति सुधियः केचिच्च लक्ष्मीपतिं
शैवाः शम्भुमुपासते पशुपतिं चान्ये कुबेरं पतिम्।
शाक्ताः हैमवतीं तथा रविपतिं नार्यश्च काश्चित्पुनः
वन्देऽहं शरणं कलौ तिरुपतिं श्रीवेङ्कटेशं प्रभुम्।। ७।।

## श्रीकृष्ण–स्तुतिः

श्रीराधाकरलालितं सुललितं लावण्यराशिं परं
विभ्राणं नवभूषणञ्च मुरलीं गोवर्द्धनोद्धारकम्।
मौलौ सन्दधतं महार्धमुकुटं बर्हञ्च चित्रं शुभं,
श्रीकृष्णं परमात्ममूर्तिमनिशं वन्दे जगद्रक्षकम्।। १।।

कृष्णं पूर्णतमं पुराणपुरुषं वाचामतीतं विभुं
ख्यातं श्रीपुरुषोत्तमं यदुवरं कंसादिदुष्टान्तकम्
वन्दे तं नवनीरदच्छविरुचिं कारुण्यरत्नाकरं
विश्वेशं सुखदायकं शुभकरं सत्यं शिवं सुन्दरम्।। २।।

कस्तूरीतिलकेन भाललसितं गोपाङ्गनालिङ्गितं,
बन्धच्छेदकरं सुमुक्तिवरदं लीलानरं श्रीहरिम्।
नीलाश्मद्युतिमिन्दुकान्तिवदनं ध्येयं सदा योगिभिः
वन्दे तं जगदीश्वरं प्रभुवरं भक्तैश्चिरं संस्तुतम्।। ३।।

दीनानां शरणं सदैव सुखदं वृन्दावनोल्लासकं
कालिन्दीपुलिनेश्वरं प्रभुवरं संसारलीलाकरम्।
भक्तानामभयप्रदाननिरतं कंसादिदुष्टान्तकं
वन्दे तं करुणानिधानपुरुषं श्रीकृष्णदेवं चिरम्।। ४।।

भक्तानन्दकरं परं सुरवरं मायापतिं श्रीधरं
गोविन्दं परमेश्वरं यदुपतिं पीताम्बरं सुन्दरम्।
श्यामं कौस्तुभभूषणं सुरपतिं श्रीराधिकावल्लभं
वन्दे तं मुरलीधरं मुरहरं श्रीकेशवं सर्वदा।। ५।।

श्री गोविन्द! नमस्तुभ्यं सच्चिदानन्दमूर्त्तये।
भक्त्या समर्प्यते पुष्पमुमारमणशर्मणा।। ६।।

विभुं नत्वा विष्णुं जनिमृतिजरातापशमनं,
विवेकग्रन्थेऽस्मिन् सकलसुखदं भक्तिजनकम्।
सुगीतं सर्वेषां जगति चिरशान्त्यै जनिभृता—
मुमानाथेनेदं व्यरचि रुचिरंविष्णुशतकम्।।

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य—विद्यावाचस्पति डा. उमारमणझाशर्मविरचितायां विवेकसहस्र्यां श्रीविष्णुशतकं सम्पूर्णम्।

# ३. शिवशतकम्



नैयायिका यं जगतोऽस्य कारणं
जीवात्मनां कर्मफलस्य दायकम्।
भजन्ति नित्यं विभुमव्ययं परं
नमामि तं दिव्यमहेशमीश्वरम्।।

# शिवस्तुतिः

कर्त्ता त्वमेव भगवन्! जगतश्च धर्त्ता
हर्त्ता महेश महिमास्ति विचित्र एव।
साक्षी सदैव नटराज! विभासि विश्वे
सर्वं विवर्तयसि नृत्यसि भासि लोके।। १ ।।

आद्यस्त्वमेव पुरुषोऽखिलतत्त्ववेत्ता,
कूटश्च सूक्ष्म! भगवन्! वरदोऽसि देव!
दुर्गा शिवा शुभकरी जननी सती सा
शक्तिस्तवैव विदितास्ति सदैव पूज्या।। २।।

मज्जामि भोः विषमये विषमे भवाब्धौ
भ्रान्तिश्च भीषयति मां गलतीह कान्तिः।
शान्तिश्च मे नहि विभो! यमराजभीतिः
मां बाधते प्रतिदिनं शरणं त्वमेव।। ३।।

ब्रह्मा त्वमेव जगतोऽस्य विशिष्टकर्त्ता
विष्णुस्त्वमेव परिपालक नास्ति चान्यः।
शंभुस्त्वमेव सततं भवनाशकोऽसि
जाने न देव! भगवन्! हर! ते च लीलाम्।। ४।।

यस्मात्सर्वं भगवत इदं जायते विश्वरूपं
यस्मिन् सर्वे विपरिणमते तत्त्वमेवासि देव!
कर्त्ता हर्त्ता त्वमसि शरणं रक्षकश्चापि लोके
जाने न त्वां कथमपि विभो! क्षम्यतां तत्कृतेऽयम्।। ५।।

महेश्वर! नमस्तुभ्यं सच्चिदानन्दरूपिणे।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।। ६।।

# श्रीवैद्यनाथ–स्तुतिः

श्री वैद्यनाथं गिरिजासमेतं

सदा वसन्तं भुवि झारखण्डे।

मनोरथान् पूरयितुं समर्थं

नमामि देवं परमेशमीड्यम्।। १ ।।

लङ्काधिपो रावणराक्षसेन्द्रो

यं देवदेवं परमं महेशम्।

सन्तोष्य लोकत्रयशक्तिमाप्तुं

तपश्चकारेन्द्रसमो बलिष्ठः।। २।।

विज्ञाय भक्तं खलु रावणन्तं,

साक्षात्स्वरूपं पुरतः प्रदर्श्य।

भक्त्या प्रसन्नस्तमुवाच शम्भुः

कैलाशमागत्य तपः प्रकर्तुम्।। ३।।

लङ्कापतिः प्राप्य शिवप्रसादं

कैलाशमासाद्य तपश्चकार।

अन्नं तथा वारि विहाय रक्षो

व्रती महेशस्य स्वरूपमग्नः।। ४।।

दृष्ट्वा परां राक्षसराजभक्ति–

मिन्द्रश्चकाराथ कुबुद्धिभावम्।

सन्तोष्य शम्भुं वरदं वदान्यं

भवेन्नु किं मत्पदभाग्जनोऽयम्।। ५।।

तुष्टः प्रभुः शम्भुरुवाच भक्तं,
भो रावण! ब्रूहि वरं यथेच्छम्।
तथा निशम्याथ वचः शिवस्य
स राक्षसो हृष्टमना बभूव।। ६।।

प्रोवाच रुद्रं तरसा तपस्वी
पौलस्त्यपुत्रो विनयेन देवम्।
लङ्कापुरीमेहि यतः सदाऽहं,
द्रष्टुं क्षमस्त्वां भगवन् भवेयम्।। ७।।

मायाबलेनैव तदा स विष्णू–
रक्षोविधानं विफलं प्रकर्त्तुम्।
लिङ्गं शिवं प्रापयितुः खलस्य
विघ्नं विधातुञ्च मतिं चकार।। ८।।

प्रोवाच शम्भुर्बलिनं स्वभक्तं
स्थाप्यं न मार्गे मम लिङ्गमेतत्।
यदैव भूमौ विवशेन वापि,
दृढ़स्थितं स्यान्न पुनर्व्रजेऽहम्।। ९।।

प्रीतो निशम्य वचनं शिवशङ्करस्य
धृत्वा सुखेन शिरसा शिवलिङ्गमाशु।
कैलाशतश्च तरसा स्वपुरीं प्रणेतु–
माकाशमार्गमनुसृत्य ययौ प्रसन्नः।। १०।।

मायावशाद् वरुणदेव इहैव मार्गे
कायं प्रविश्य कृतवान् खलु मूत्रपीडाम्।
लिङ्गं शिवस्य गिरितो नहि यातु लङ्कां
तन्मूत्रवृद्धिमकरोद् वरुणो वपुस्थः।। ११।।

मूत्रातुरः पथि समागतविप्ररूपं
विष्णुं विनीतवचनैः स ययाच भीतः।
भो! विप्र! रक्ष मम देवमिमं सयत्नं
स्कन्धे निधाय जगदीश्वरमाद्यदेवम्।।१२।।

सम्प्रार्थये पुनरिदं भगवन्! भवन्तं
भूमौ कदापि न महः शिवलिङ्गमेतत्।
स्थाप्यं भवस्य कृपया विपदः क्षणेऽस्मिन्
मूत्रं विधाय तरसा पुनराप्तुमीहे।।१३।।

विप्राय तस्मै पथि रक्षणार्थं
स रावणो लिङ्गमदात्सुपूज्यम्।
मूत्रञ्च विस्रष्टुमना सुरारिः
शीघ्रं ययौ मूत्रनिदानखिन्नः।।१४।।

मूत्रन्तु धारात्मकमेव तस्य
निसर्गतो निर्झरितं चिराय।
रोद्धुं न शक्तो दनुजस्य राजा
यातः सुदीर्घः समयो विसर्गे।।१५।।

लिङ्गञ्च भूमौ भगवान् मुरारिः
संस्थाप्य तद् रावणमाह शीघ्रम्।
नाह समर्थोऽस्मि गुरुं प्रधर्त्तुं
किमर्थमेवं कुरुषे विलम्बम्।।१६।।

सुश्राव वाचो नभसः प्रचण्डां,
रे रावण! त्वं हरिणा छलेन।
प्रवञ्चितस्तां सहसा निशम्य
खिन्नोऽतिदीनो दनुजाधिपस्सः।।१७।।

उद्धर्तुकामः प्रबलः सुरारिः
शशाक नैवाथ कदापि लिङ्गम्।
पुनः पुनस्तच्छिवलिङ्गमाप्तुं
स रावणो यत्नमियेष तत्र॥१८॥

भो! रावण! व्यर्थपरिश्रमेण
शक्यं न नेतुं शिवलिङ्गमस्मात्।
स्थानात्पुरीं स्वामधुना प्रयाहि
ध्यात्वा शिवं चात्र कृतप्रतिष्ठम्॥१९॥

आकाशवाणी श्रवणेन खिन्नो
मेने तदा स्वात्मतपोवृथात्वम्।
ज्ञात्वा छलं विष्णुकृतं विशिष्य
प्रणम्य शम्भुं पुरगन्तुकामः॥ २०॥

नत्वा स्थितं दृढ़तमं शिवलिङ्गमेत–
दुवाच भिल्लमति–भक्तमसौ सुरारिः।
अर्च्यस्त्वयैव कृपया भगवान् महेशः
सम्प्रार्थये प्रतिदिनं कृपया सुपूज्यः॥ २१॥

लिङ्गं शिवस्य परमं परमेशरूपं
कामं समस्तजगतः परिपूर्णदञ्च।
धर्मार्थकामसहितं भुवि मुक्तिदन्तं
श्रीवैद्यनाथचरणं शरणं प्रपद्ये॥ २२॥

विचिन्त्य रक्षोगणभूप एषो
विरच्य भक्त्या त्विह चन्द्रकूपम्।
चिक्षेप तोयानि पवित्रकाणि
नानानदीतीर्थसमागतानि॥ २३॥

आदाय तोयं स तु चन्द्रकूपात्
श्रीवैद्यनाथस्नपनं विधाय।
सम्पूज्य लिङ्गं विविधोपचारैः
शिरः स्वकीयं खलु दातुमैच्छत्।। २४।।

भूत्वा प्रसन्नः स जगाद शम्भुः
छेत्तुं शिरो नैव तवास्ति योग्यम्।
त्रेतायुगे दाशरथिः शरेण
छित्वा ध्रुवं दास्यति ते सुमुक्तिम्।। २५।।

नितान्तहृष्टो वचनं निशम्य
निर्माय देवालयमाशु तत्र।
गङ्गाजलेनाथ च बिल्वपत्रैः
समर्च्य देवं प्रणनाम शम्भुम्।। २६।।

प्रान्ते बिहारे स तु वैद्यनाथः
पूज्यः प्रभुर्दुःखहरो गिरीशः।
प्रख्यातदेवो गिरिजासमेतः
पायात्सदोमारमणो महेशः।। २७।।

# शिवस्तुतिः

त्वमेवासि पूज्यो जगत्स्थावराणां
विभो त्वं हि वन्द्यस्सदा भूसुराणाम्।
जगत्वां वरिष्ठः पिनाकी प्रभुस्त्वं
त्रिलोकस्य सृष्टेः स्थितेः संहृतेश्च।। १।।

विभुर्व्यापको विश्वरूपः शिवस्त्वं,
त्वमेवातिसूक्ष्मो न जाने स्वरूपम्।
जगत्यां महान्तः सुराः सन्त्यनेके
प्रभुस्तेषु पूज्यस्त्वमेको न चान्यः।। २।।

जगद्धेतुभूतं जगन्नाथरूपं
न वेत्तुं न मन्तुं समर्थोऽस्ति कश्चित्।
कथं त्वं समर्च्यः प्रभो मानवानां
विचित्रं त्वदीयं न जाने चरित्रम्।। ३।।

त्वदीयांशभासा जगत्यां समस्ता–
स्त्वदीयांशरूपा वयं जागरूकाः।
त्वदीयांशरूपेण भान्ति प्रकाशाः
पुरारे विभो त्वं सतां रक्षकश्च।। ४।।

चराणां विधाता तथैवाचराणां
सुपालस्त्वमेवासि नास्ति त्वदन्यः।
प्रसृष्टस्य संहारकोऽपि त्वमेव
त्वमेव त्रयाणां गुणानामधीशः।। ५।।

विराड् विष्णुरूपो विभुस्त्वं महेशः महः सच्चिदानन्दरूपो गिरीशः
नमस्यो जगत्यां सदा शंभुरीशः त्वमेवासि देवो महेशो ममेशः।। ६।।

# महाकालस्तोत्रम्

महादेवो देवो भवतु मम नाथः प्रभुवरो
महाकालः शंभुर्नगपतिसुतार्धीकृततनुः।
मृडो रुद्रो भीमो गरलपमहेशो भव इति
जटाधारी वन्द्यो हरतु निखिलं कष्टमनिशम्।। १ ।।

महेशं लोकेशं भवभयहरं शम्भुमनिशं
स्तुवन्ति स्वर्गस्था विविधविबुधा ध्यानसहिताः।
विचित्रं भूतेशं त्रिभुवनपतिं त्वां पशुपतिं
महो दिव्यं लिङ्गं सुविदितमहाकालशिवदम्।। २ ।।

सदा पूज्यो देवो विलसति महेशो भुवि हरः
त्रिलोकी भूतेशो वितरति विभूतिं करुणया।
महाकालो दिव्यो कलिमलहरो हन्ति कलुषं
विशालावास्तव्यः पशुपतिरयं विक्रमनुतः।। ३ ।।

यं देव–दानव–पिशाच–मनुष्य–वन्द्यं विष्णुः सदा निखिलकारणमाद्यदेवम्।
ब्रह्मापि नौति परमं हरमीश्वरन्तं भक्त्या नमामि चरणं जगदीश्वरस्य।। ४।।

भस्मैकमात्रविभवं जगदीश्वरन्तं भूतादिसेवितपदं परमं पवित्रम्।
सर्पादिभूषिततनुं गिरिजापतिं तं दिग्वाससं परमपूज्यमहं प्रपद्ये।। ५ ।।

श्रीचन्द्रचूडचरणौ शरणं मदीयं श्री शम्भुशक्तिनिलयं शरणं ममास्ति।
श्रीविश्वनाथसदनं शरणं समेषां श्रीभूतनाथभवनं शरणं समीहे।। ६ ।।

उज्जयिन्यां महाकालं प्राप्य स्तोत्रमिदं शुभम्।
सद्भक्त्या लिखितं पुण्यमुमारमणशर्मणा।।

# परमेश्वर–स्तुतिः

यं सच्चिदानन्दमिति प्रभुं परं
वेदान्तिनो ब्रह्म वदन्ति चिन्मयम्।
सायुज्यमाप्तुं सततं विवेकिनः
श्रुतिं समाश्रित्य भजन्ति शूलिनम्।। १ ।।

विश्वस्य भोगान् जलबुद्बुदोपमान्
त्यजन्ति सर्वान् खलु योगमाश्रिताः।
भजन्ति यं योगसमाधिनाऽभयं
प्राप्तुं तमीशं भुवि योगिनः सदा।। २ ।।

यं देवदेवं मनसाप्यगोचरं
वाचः परं नित्यमनन्तनामकम्।
विहाय सर्वान् निजबन्धुबान्धवान्
भजन्ति केचिद् यतयो यमीश्वरम्।। ३ ।।

मीमांसकाः कर्मबलेन मोक्षदं
यं यज्ञदेवं भुवि चिन्तयन्त्यहो।
विचिन्त्य निर्मथ्य मखादिकाः क्रियाः
नमन्ति सोमार्धधरं महेश्वरम्।। ४ ।।

नैयायिका यं जगतोऽस्य कारणं
जीवात्मनां कर्मफलस्य दायकम्।
नित्यं विभुं सर्वगतं तमीश्वरं
भजन्ति यत्नेन परं शिवं महः।। ५ ।।

सांख्या भजन्ते पुरुषञ्च साक्षिणं
चैतन्यरूपं खलु निर्गुणं परम्।
जडात्मिका सा प्रकृतिः गुणात्मिका
यत्संगतश्चात्र करोति सर्जनम्।। ६।।

वेदप्रमासाध्यविधौ च कारणं
नित्यं शिवं ज्ञानमनन्तरूपिणम्।
उपासते यं परमाणुरूपकं
वैशेषिकास्ते कणभक्षपक्षतः।। ७।।

बौद्धा भदन्ताः क्षणभङ्गवादिनो
बुद्धं भजन्ते खलु सौगतं परम्।
चत्वारि सत्यानि वदन्त एव त
उपासते नित्यसमन्तभद्रकम्।। ८।।

सशङ्खचक्रं पुरुषं किरीटिनं
यं वैष्णवा ध्यानरताः पुरातनम्।
भजन्ति जीवाः परमेश्वरं विभुं
वैखानसाः यं खलु पाञ्चरात्रकाः।। ९।।

जैनाः सदैवं जिनशासनाश्रिताः
श्वेताम्बरा ये च दिगम्बरा मता।
भजन्ति चार्हन्निति नामतो बुधाः
यं देवदेवं परमेश्वरं परम्।।१०।।

सौराश्च सूर्यं समुपासते जनाः
शाक्ताश्च शक्तिं परमेश्वरीं पराम्।
विनायकं यं गणनाथनायकं
गणेशतन्त्रे प्रवदन्ति साधकाः।।११।।

पितामहं यञ्च पुराणपाठका:
शैवा: शिवं यं प्रणमन्ति नित्यश:।
विष्णुञ्च यं ध्यानरताश्च वैष्णवा
उपासते तं परमं परं नुम:।।१२।।

शक्तिं शिवान्तां परमेश्वरीं परां
दुर्गां त्रिनेत्रां परमां परात्पराम्।
उपासते यां विविधोपचारत:
भक्ताश्च ये सन्ति पराम्बिकारता:।।१३।।

तन्त्रेण केचित्प्रवदन्ति तान्त्रिका:
मन्त्रेण केचिन्निगदन्ति मान्त्रिका:।
यन्त्रेण लब्धुं सततं च यान्त्रिका:
भजन्ति देवीं परमेश्वरीं पराम्।।१४।।

एवं विचित्रैर्विविधोपचारत:
यं देवदेवं परमेश्वरं परम्।
शिवञ्च नित्यं जगतोऽस्य कारणं
नमामि सर्वज्ञमहं महेश्वरम्।।१५।।

गङ्गाधरं लोकगुरुं महेश्वरं
पिनाकिनं शङ्करमुज्ज्वलं शिवम्।
श्रीपार्वतीशं करुणाकरं परं
तं देवदेवं परमेश्वरं भजे।।१६।।

# गङ्गाधर—स्तुतिः

गङ्गाधरन्तं परमं महेशं देवाधिदेवं भुवनैकवन्द्यम्।
तं चुञ्चनाद्रौ सुखमावसन्तं श्रीशङ्करं प्राञ्जलिरानतोऽस्मि।। १ ।।

मृत्युञ्जयन्तं गिरिजासमेतं सदा वसन्तं भुवि चुञ्चनाद्रौ।
मनोरथान् पूरयितुं समर्थं नमामि देवं परमेशमीड्यम्।। २ ।।

दीनार्तिदुःखं भवरोगमूलं पापञ्च भक्तस्य करोति नष्टम्।
गङ्गाधरन्तं भुवि वन्दनीयं श्रीचुञ्चनाद्रौ सततं वसन्तम्।। ३ ।।

विश्वेश्वरन्तं भवरोगवैद्यम्
श्रीपार्वतीशं गिरीशं परेशम्।
सौख्यप्रदं राक्षसनाशकं तं
गङ्गाधरं नौमि सदाशिवन्तम्।। ४ ।।

रामप्रियं शम्भुमनादिदेवं
श्रीचुञ्चनाद्रौ सुखमावसन्तम्।
श्रीवैद्यनाथं शरणं समेषां,
गङ्गाधरन्तं प्रणमामि नित्यम्।। ५ ।।

तं देव—दानव—पिश चमनुष्यवन्द्यं
ब्रह्मापि नौति परमं भुवि चुञ्चनाद्रौ।
श्रीकालभैरवबुधं शिवरूपमाद्यं
भक्त्या नतोऽस्मि सुखदं शुभदं शरण्यम्।। ६ ।।

गङ्गाधर ! नमस्तुभ्यं सच्चिदानन्दमूर्त्तये।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।। ७ ।।

# द्वादशज्योतिर्लिङ्गस्तुतिः

सौराष्ट्रे भुवि सोमनाथगिरिशः क्षेत्रे प्रभासे स्थितः
ज्योतिर्लिङ्गमसौ समस्तजगतां पूज्यो महेशः सदा।
देवो यो वरदो विभुः क्षयहरश्चन्द्रस्य मृत्युञ्जयः
तं पूज्यं जगदीश्वरं पशुपतिं वन्दे परं शङ्करम्।।१।।

काश्यां यो भुवि राजते पशुपतिर्गङ्गातटे सर्वदा
मृत्युं प्राप्तजनस्य योऽस्ति वरदः काश्यां तु मुक्तिप्रदः।
ज्योतिर्लिङ्गमिदं पुराणगदितं श्रीविश्वनाथः स्वयं
पायान्नः सततं सुरासुरनुतः श्रीशङ्करः सर्वथा।।२।।

विशालायां पुर्यां लसति भुवने शङ्करगुरुः
महाकालो लिङ्गं विदितविदितं क्लेशशमनम्।
शरण्यं लोकानां भवति सुखदं मोक्षजनकं,
सदा वन्दे देवं सुरनरमुनीन्द्रैरभिनुतम्।।३।।

ओंकारेश्वरनाथ एव शरणं स्वर्गप्रदो भूतले,
भूतेशो भुवि नर्मदातटगृहे मध्यप्रदेशे सदा
लिङ्गं श्री अमलेश्वरस्य वरदं देवैः सदा पूजितं
वन्देऽहं करुणाकरं पशुपतिं शम्भुं परं सादरम्।।४।।

भूतेशो विलसत्यहो पशुपतिर्केदारखण्डे सदा
ज्योतिर्लिङ्गमिदं सदा सुखकरं शीताधिके पर्वते।
केदारोऽस्ति महेश्वरो जगति यो पूज्यश्च वन्द्यः सदा
तं शंभु शरणागतस्य वरदं श्रीआशुतोषं भजे।।५।।

श्रीशैले निवसत्यसौ प्रभुवरश्चान्ध्रे प्रदेशे सदा
ज्योतिर्लिङ्गमिदं शिवस्य सुखदं संसारबन्धापहम्।
आद्या शक्तिरिहास्ति शास्त्रभणितिः सर्वत्र संश्रूयते
पायान्नो गिरिशः सदा भयहरो लोकेषु वन्द्यो विभुः।। ६।।

प्रान्ते रत्ने बिहारे सकलभयहरो वैद्यनाथो महेशः
ज्योतिर्लिङ्गं विचित्रं धनसुतजनकं कामदं मोक्षदं यत्।
पूज्यो वन्द्यो गिरीशो हरि—विधि—विबुधैः सादरं गीयमानः
पायान्नः शर्वदेवो स्मरहर इति यः कीर्तितो रावणेशः।। ७।।

डाकिन्यां निवसत्यसौ शिवकरः श्रीभीमशम्भुःक्षितौ,
ज्योतिर्लिङ्गमसौ पुराणगदितं संरक्षकं प्राणिनाम्।
चासामे त्वथ सह्यशैलशिखरे प्रान्ते महाराष्ट्रके
लिङ्गद्वन्द्वमसौ शिवस्य वरदं सम्पूज्यते मानवैः।। ८।।

महाराष्ट्रे शम्भुर्लसति शिवलिङ्गं सुरनुतम्
सदा ज्योतिर्लिङ्गं भुवि विदितघुष्मेश्वर इति।
शरण्यो भक्तानां सपदि सुखदो यः पशुपतिः
सदा वन्दे देवं त्रिपुरशमनं शोकहरणम्।। ९।।

गोदावर्यास्तटे यो निवसति वरदः त्र्यम्बकेशो महेशः
ज्योतिर्लिङ्गं सुपूज्यं दनुजनरनुतो शङ्करो योऽस्ति वन्द्यः।
लोकानां यः शरण्यो भवति पशुपतिः गौतमेनातिपूज्यः
पायान्नः शम्भुरीशो भवभयशमनो वामदेवोऽतिधन्यः।। १०।।

प्रान्ते गुर्जरनामके प्रभुरसौ नागेश्वरो राजते
ज्योतिर्लिङ्गमसौ विभुर्विजयते श्रीदारुकाख्ये वने।
लोकानां शरण्यं सदैव सुखदं लिङ्गं महेशस्य यत्
तल्लिङ्गं सुरवृन्दमानवनुतं वन्दे सदा शङ्करम्।। ११।।

श्री रामेश्वरलिङ्गमस्ति वरदं श्रीराघवेणार्चितं,
पुण्ये दक्षिणभारते विजयते सिन्धोस्तटे यो हरः।
आधि–व्याधिविनाशको भयहरः श्रीसीतया स्थापितः,
तं शर्वं भुवि पापतापहरणं श्रीशङ्करं संभजे।।१२।।

ज्योतिर्लिङ्गमयः प्रभुर्विजयते श्रीशङ्करो भूतले
नानास्थानसुपूजितो दनुजहा यो द्वादशैर्लिङ्गिभिः।
आर्या–विष्णु–विधिप्रपूजितविभुं श्री आशुतोषं शिवं,
देवन्तं मुनिवन्दितं पशुपतिं भूतेशरूपं भजे।।१३।।

## कैलाश स्तुतिः

कैलासं शिवशङ्करस्य सदनं धन्यं पवित्रं स्थलं
वन्द्यं मानसरोवरस्य निकटे रम्यं परं पावनम्।
पुण्यं तीर्थमयं सुरासुरवरैरासेव्यमानं सदा
वन्देऽहं दिवि संस्थितं शिवपुरं स्वर्गप्रदं सर्वदा।।१।।

## अमरनाथस्तुतिः

काश्मीरे वरदं विभुं हिममयं लिङ्गं नगाद्रौ स्थितं
दूरात्प्राप्य जना भवन्ति सुखिनो दृष्ट्वा शिवं शङ्करम्।
नानाकष्टहरं परं सुखकरं विश्वैकवन्द्यं भजे
नाथन्तं त्वमराभिधं पशुपतिं गन्धर्वलोके स्थितम्।। २।।

## पशुपतिनाथ—स्तुतिः

नेपाले सुरवन्दितो विभुवरः श्रीशङ्करो राजते
शर्वः सर्वमयो हरः प्रभुवरः श्रीकाष्ठमाण्डुस्थितः।
पूज्ये यन्निकटे सदा गिरिसुता श्रीवाग्वती चादृते
तं देवं परमेश्वरं भयहरं स्वर्गप्रदं संभजे।। ३।।

## लिङ्गराजस्तुतिः

मुख्यो यो भुवनेश्वरे पशुपतिः प्रान्ते शुभे चोत्कले,
प्रख्यातः खलु लिङ्गराज इति यः पूज्यो जनानां सदा।
प्राचीनः शिवशङ्करो विजयते लोकस्य संरक्षकः
तं वन्दे भुवनेश्वरं प्रभुवरं श्रीलिङ्गराजं सदा।। ४।।

# पञ्च महाभूत–लिङ्गस्तोत्रम्

## चिदम्बरस्तुतिः

आकाशलिङ्गं सुखदं जनानां
चिदम्बरं यत्प्रथितं जनेषु।
सुरासुरैर्वन्दितमाद्यदेवं
वन्दे वसन्तं भुवि मद्रपुर्याम्।। १।।

आन्ध्रे वसन्तं भुवि कालहस्त्यां
तद्वायुलिङ्गं सुखदं शरण्यम्।
पूज्यं जनानां वरदं सदैव
वन्दे शिवं दिव्यविभुं महेशम्।। २।।

## जम्बुकेश्वरस्तुतिः

तं विश्वनाथं भुवि तोयलिङ्गं महेश्वरं लोकहितं गिरीशम्।
श्रीशम्भुनाथं शरणं जनानां श्रीजम्बुकेशं सततं नमामि।। ३।।

## काञ्चीपुरस्थशिवलिङ्गस्तुतिः

काञ्चीपुरस्थं शिवलिङ्गरूपं महेश्वरं शङ्करदेवमीड्यम्।
लोकैकवन्द्यं जगदीश्वरन्तं वन्दे गिरीशं सततं शरण्यम्।। ४।।

## तिरुवन्नमलाई–शिवस्तुतिः

तेजो लिङ्गं भुवनविदितं मद्रपुर्यां वसन्तं
शर्वं सत्यं सुरनरवरैर्पूजितं देवदेवम्।
दिव्यं तेजो भवभयहरं लोकनाथं गिरीशं,
वन्दे देवं परमसुखदं लोकवन्द्यं महेशम्।। ५।।

# वीरेश्वर–स्तुतिः

उद्यानभूमिवसते महते शिवाय वीरेश्वराय वरदाय महेश्वराय।
भक्तार्त्तकष्टशमनाय दिगम्बराय गौरीपते! भगवते महसे नमस्ते।।१।

धर्मार्थकामफलदाय सुरार्चिताय
मुक्तिप्रदाय भवसागरतारकाय।
सर्वार्थसिद्धिजनकाय गिरीश्वराय
वीरेश्वराय भगवन्! भव! ते नमस्ते।। २।।

श्रीशम्भुं प्रणमामि देवमनिशं कामेश्वरं कीर्तिदं,
दीनानां परिपालकं प्रभुवरं ज्ञानप्रदं मुक्तिदम्।
उद्यानस्थितमाद्यदेवमनघं रोगादिसंहारकं
नित्यं नौमि महेश्वरं भयहरं वीरेश्वरं शङ्करम्।। ३।।

श्रीवीरेश्वरपादपद्मयुगलं प्रक्षाल्य नूनं जयः
श्रीवीरेश्वरनाथसेवनरतो नित्यं यशोभाजनम्।
श्रीवीरेश्वरभक्तिभावरसिकाः सर्वं लभन्ते ध्रुवं,
श्री वीरेश्वर एव रक्षति कलौ क्लेशान्वितान् मानवान्।। ४।।

वीरेश्वर! नमस्तुभ्यं वैद्यनाथ! नमोऽस्तुते।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।। ५।।

शिवं देवं नत्वा जनिमृतिजरातापशमनं,
विवेकग्रन्थेऽस्मिन् सकल सुखदं भक्तिजनकम्।
सुगीतं सर्वेषां जगति चिरशान्त्यै जनिभृता–
उमानाथेनेदं व्यरचि शुभदं शंभुशतकम्।।

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य–विद्यावाचस्पति डा. उमारमणझाशर्मविरचितायां विवेकसहस्र्यां श्रीशिवशतकं सम्पूर्णम्।

# ४. पुरुषार्थ–चिन्तन–शतकम्



मोक्षार्थं यतते नरो बहुविधो बद्धो महाबन्धने
विद्या चापि विमुक्तये निगदिता शास्त्रेषु सर्वेषु च।
नानादर्शनतत्त्वतोऽस्ति गदितं ज्ञानाच्च मुक्तिर्यथा
मोक्षो मुख्य इति प्रधानवचनं पुंसां हि लक्ष्यं स्मृतम्।।

# धर्म–महिमा

सदा धर्मः श्रेष्ठो भवित भुवने मङ्गलकरो
ध्रुवं रक्ष्यो धर्मः सततमनुसेव्यो नरवरैः।
अहो! धर्माद्धीनो भवति मनुजः पामरजनो
नरो धर्मं कृत्वा सपदि लभते स्वर्गसदनम्।। १।।

पापं यः कुरुते स एव भजते सद्यः फलं दुःखदं
धर्मं यः श्रयते सुखं स लभते नूनं फलं मङ्गलम्।
धर्मो यत्र जयोऽस्ति तत्र सुलभः शास्त्रेषु प्रोक्तं यथा
तस्मादेव विधेयमस्ति भुवने धर्मस्य कार्यं सदा।। २।।

धर्मो रक्षति रक्षितो हि मनुजो धर्मं विनाऽरक्षितः
धर्मेणैव भवन्ति साधितफलाः सम्मानमाप्ता जनाः।
ये धर्मं समुपेक्ष्य पापरसिकास्ते यान्ति घोरं तम–
स्तेषां नास्ति गतिः कदापि सुखदा नो वा भवत्यादरः।। ३।।

धर्मार्थं हि युधिष्ठिरोऽमितसुखं सन्त्यज्य राज्यं ततो
नानाक्लेशमवाप्य घोरविपिने कष्टाश्रितोऽभूत्सदा।
ईशश्चापि सदैव धर्मवलितान् संरक्षितुं यत्नतः
तद्धर्मार्थमवातरद्धि भुवने नाशाय वै दुष्कृताम्।। ४।।

धर्मार्थं स्वधनं गृहं निजजनान् त्यक्त्वापि धर्माश्रितः
प्राणांश्चापि सुखं मुदैव भुवि यस्त्यक्तुं सदा तत्परः।
हन्तुं पूज्यगुरून् प्रियान् निजजनान् युद्धे रताः पाण्डवाः
रामश्चापि जघान दुष्टदनुजान् धर्मार्थतः केवलम्।। ५।।

सत्यं सूर्यकुलस्य धर्म इति यो मेने हरिश्चन्द्रराट्
दत्वा राज्यमहो तदैव मुनये धर्मस्य संरक्षणे।
तस्यैव प्रतिगेहमद्य मनुजा गायन्ति गीतं भृशं
धर्मान्नास्ति परो विचार्य मतिमान् सर्वत्र जेगीयते।। ६।।

धर्मे स्वे निधनं वरं नहि ततः पन्थाश्च सौख्यप्रदः
धर्मार्थं हि विभीषणो रघुपतेः पादाश्रयं प्राप्तवान्।
दुष्टो रावण आहवे प्रभुवरैर्व्यापादितोऽधर्मतः
पापाचाररतासुरा विनिहता युद्धेषु देवैः सदा।। ७।।

प्राणांश्चापि दधीचिरस्थि वपुषस्त्यक्त्वा ददौ वज्रिणे
धर्मार्थं मुनयो ददुः स्वतपसः शक्तीः नृपेभ्यो भृशम्।
धर्मान्न स्खलिता दशाननभिया श्रीजानकी मानुषी
क्लेशानाप्य मुनीन्द्र–देव–मनुजैरद्यापि जेगीयते।। ८।।

धर्मार्थं समवातरच्च भुवने विष्णुर्गृहीत्वा वपुः
कंसादीन् हतवानुदारचरितो नारायणो भूरिशः।
सर्वत्रैव ररक्ष धर्ममखिलं हत्वा सदा दुष्कृतः
नूनं धर्मसमं न किञ्चिदपरं श्रेयस्करं विद्यते।। ९।।

धर्मादूर्ध्वगतिर्बुधैर्निगदिताऽधोऽधोगतिः पापतः
नूनं सत्यमुदीरितं भगवता नारायणेन स्वयम्।
धर्मासक्तजनोऽस्ति लब्धुमखिलं मोक्षं परं शान्तिदं
तस्माद्धर्मरता भवन्तु मनुजाः प्राणार्पणेनापि वै।। १०।।

धर्मो मूलमशेषपादपतरोः न्यायस्य सत्कर्मणः
धर्मान्नास्ति समोऽन्यकोऽपि सुखदः सद्बन्धुरस्यां क्षितौ।
भार्यामित्रसहोदराश्च सुहृदः प्राणान्तकाले ध्रुवं
त्यक्त्वा ते विमुखा भवन्ति सहसा "धर्मः सदा रक्षकः"।। ११।।

पुमर्थाश्चत्वारो विदितविदितास्तन्त्रगदिता:
बुधैर्धर्मो मुख्य: प्रथम इति तत्रापि कथित:।
विना धर्मं लोके भवति न कदाप्यर्थविभव:
ध्रुवं धर्म: श्रेष्ठ: सकलसुखलाभाय भवति।।१२।।

यदा धर्मग्लानिर्विविधभयरोगा भुवि नृणां
जना: दु:खैरार्त्ता विभवरहिता व्याधिभरिता:।
न कामो मुक्तिर्वा भवति सुलभा धर्मविरहे
ध्रुवं धर्मो ज्येष्ठो झटिति सुखभोगं वितनुते।।१३।।

असारे संसारे भवति न सुखं धर्मरहिते
नरे नूनं न्यूनं धनमपि विलीनं प्रतिदिनम्।
धनाभावे पुंस: कथमपि न कामो विजयते
सदा कामाभावे भजति न सुमुक्तिं खलु जन:।।१४।।

अवश्यं कर्त्तव्य: जगति सततं धर्मनिचय:
धनं श्रेय: सर्वं भवति हि नृणां धर्मनिचयात्।
धनात्कामस्यापि प्रथितमिह भव्यं सुजननम्।
ध्रुवं मुक्ति: साध्या भवति भुवि धर्मेण सततम्।।१५।।

न देवो न बन्धुर्न माता न राजा,
न मित्रं न पुत्रो न भर्त्ता न जाया।
न कालो न यानं न वित्तं कदाचित्
न धर्मं विना कोऽपि संरक्षकोऽस्ति।।१६।।

# अर्थ–महिमा

हत्वा बन्धुजनं छलेन पितरं प्राप्तुं धनं सोत्सुकः
लब्ध्वा यन्मनुते स एव हि नरो धन्यं परं जीवनम्।
तृप्तिं नैव कदापि याति पुरुषः प्राप्य प्रभूतं धनं
सर्वत्रैव सदा भ्रमन्ति मनुजाः तृष्णामरीचौ मृगाः।। १।।

द्रव्यं प्राप्य महीतलेऽतिकृपणो दुष्टोऽपि वन्द्यस्सदा
विद्वांसश्च सहस्रशो विदधति क्लेशं यमर्थं विना।
यस्यार्थः स नरः सदैव कुशलो धन्यश्य मान्यः क्षितौ
तस्मात् तद् द्रविणं समस्तभुवने प्रोक्तञ्च प्रेयस्करम्।। २।।

अर्थेनैव भवत्यहो खलु नृणां सौख्यं चिरं भोगदं
नूनं धर्मसहायकं प्रतिदिनं कीर्तिप्रद तद्धनम्।
कामस्यापि धनेन पूर्त्तिरखिला संलक्ष्यते सर्वदा
तस्मात् तद्द्रविणं सदैव गदितं तुष्टिप्रदं मानवैः।। ३।।

दीनो यो भुवि कथ्यते निजजनैरन्धश्च दुष्टो नरः
भोग्यं नास्ति हि तस्य भालपटले वस्त्रस्य भोज्यस्य च।
देहश्चापि विकारभावललितः संलक्ष्यते यद्विना
नूनं क्षेमकरं परं भुवि धनं सर्वार्थसिद्धिप्रदम्।। ४।।

यं लब्ध्वा समुपैति मानमतुलं लोके ध्रुवं मानवः
सौविध्यं भजते सुखेन सततं सौख्यञ्च कीर्तिं क्षितौ।
नानाशास्त्रविशारदोऽपि सहसा यस्य प्रसादान्नरः
प्राप्तेन द्रविणेन तेन भुवनं क्रीणाति वै किं ततः।। ५।।

वस्त्रं गेहमथापि वस्तुसकलं प्राप्तुं यदर्थं विना
शक्ता नैव भवन्ति भूमिवलये विद्वद्वरेण्या अपि।

आढ्य: सागरपारमप्यतिजवाद् यानेन गन्तुं क्षम:
धन्यं धन्यमिदं धनस्य धवलं प्रायो यशो गीयते।। ६।।

धृत्वा जीर्णमशोभनं कुवसनं बंभ्रम्यते मानव:
सोढ्वा क्लेशचयं कठोरवचनं वज्रोपमं कर्कशम्।
ग्रीष्मे तिग्मतमे तपत्यनुदिनं वर्षासु छत्रं विना
नूनं व्यर्थमिदं जनु: खलु नृणामर्थं विना सर्वदा।। ७।।

अर्थस्यैव भवन्ति दाससदृशा लोके सदा सर्वथा
भृत्या नित्यमुपासते च धनिकान् प्राप्तुं धनं भूरिश:।
वैद्यो ज्योतिषपण्डिताश्च वणिजो वाक्कीलरूपा जना:
अन्ये चापि छलाद्धरन्ति विभवं शीघ्रं समस्तं नृणाम्।। ८।।

अर्थोऽनर्थकरोऽस्ति शास्त्रवचनं नूनं न मे रोचते
अर्थो बन्धनकारकोऽस्ति कथनं मन्ये वृथा भाषणम्।
अर्थेनैव विमुच्यते तु निगडात् कारागृहात् बन्धनात्
अर्थो लोकहिताय शान्तिजनकस्त्रातुं च दु:खात् क्षम:।। ९।।

नानाक्लेशहरं धनं भुवि नृणां श्रेय:प्रदं सौख्यदं
रोगाणां शमने विदेशगमने मित्रं सदा साधकम्।
आधिव्याधिसमाकुलस्य कथितं दिव्यं परञ्चौषधं
धन्यं स्वर्गसुखस्य प्रीतिजनकं मातेव संरक्षकम्।। १०।।

पिता त्यक्त्वा पुत्रं मुखमपि न भ्रातुश्च पुरत:
पतिं दु:खे दृष्ट्वा त्यजति धनलोभाच्च सदनम्।
कुरूपं दुष्टं वा नरमपि समालोक्य धनिकं
ध्रुवं प्रीता नारी सपदि भजते तं धनवशात्।। ११।।

न भार्या न माता न पुत्रो न पुत्री पिता वा कदाचिज्जगत्यां सहाय:।
धनं सौख्यमूलं जनानां शरण्यं विनार्थं भ्रमन्ति नरा अन्धतुल्या:।। १२।।

# काम–महिमा

कामोऽपि मुख्यः पुरुषार्थहेतुः
व्यग्राश्च सर्वे खलु कामपूर्त्यै।
कामो जनानां जनकः प्रवृत्तेः
कामो हि मूलं मनुजस्य यत्ने॥ १॥

इच्छैव कामः खलु शास्त्रवाक्यं,
न केवलं मैथुनमेव कामः।
धनञ्च धान्यञ्च सुताश्च जायाः
गृहाश्च कामस्य विभोर्विलासाः॥ २॥

कामस्य दासा मनुजा मुनीन्द्राः
कामस्य पाशे सकलाश्च बद्धाः।
कामो नृणां धैर्यविदारकश्च
कामेन तुष्टो नहि कोऽपि लोके॥ ३॥

कुर्यात्सुरःज्याय दशाश्वमेधं
कुर्याच्च यज्ञं धनलाभहेतोः।
पुत्राय कुर्यात्पृथगेव यागं
कामार्थपूर्त्यै खलु कर्मकाण्डः॥ ४॥

धर्मेण चार्थश्च ततश्च कामः कामाद्विमुक्तिः खलु शास्त्रयुक्तिः।
कामं प्रपूर्यैव तु चात्मतृप्तिः यावन्च कामो नहि तत्र मुक्तिः॥ ५॥

कामो न भोगेन कदापि शान्तो, लोके तु कामः सततं बलीयान्।
कामार्थमेवं सततं भ्रमन्ति, यतो हि सर्वे रजसा सुबद्धाः॥ ६॥

कामेषु कामो बलवान् सदैव, देवान् मुनीन्द्रांश्च वशीचकार।
जहुः तपो नैकमहर्षयोऽपि कामातुरा मारशरानुविद्धाः॥ ७॥

सत्कर्म—सद्धर्म—विनाशदक्षः
सम्मोह—संहारण—बद्धकक्षः।
सन्तापशोकानलदानदक्षः
कामः सदैवाद्भुसवामपक्षः।। ८।।

वीरन्तं कमनीयकोमलतनुं धैयादिविध्वंसकं,
नानाभावसमन्वितं रतिपतिं विश्वस्य सम्मोहनम्।
विश्वामित्रपराशरादिसुधियां प्रध्वंसकं चेतसां
सर्वत्रैव विदारकं मतिमतां बुद्धेर्नुमो मन्मथम्।। ९।।

निष्कामकर्म सततं शुभदं नराणां
कृष्णेन चोक्तमिति शास्त्रवचः प्रमाणम्।
यावन्न कर्मफलमवाप्य जनो निवृत्तः
बंभ्रम्यते बुधजनोऽपि हि कामसक्तः।। १०।।

कामाय युद्धनिचयाज्जनतास्वशान्तिः
संहारकारणमहो भुवि शान्त्यभावः।
सृष्टिं करोति भुवनस्य सदैव कामः
जन्तोश्च पालनमहो प्रकरोति कामः।। ११।।

कामं कामं प्रकर्त्तुं भ्रमति जड़मतिः कामतृप्तिं न याति,
कृत्वा कामं प्रकामं पुनरपि कुरुते कामयत्नं सयत्नम्।
नैको राजा धनाढ्यः कथमपि भुवने तृप्तिमाप्तः कदाचित्
कामः सर्वं प्रवृत्तौ गमयति सततं सागरे भ्रान्तचित्तान्।। १२।।

कामो नराणां सततं प्रियोऽस्ति कामे सदा चिन्तनमस्ति लोके।
कामं विना नैव सुयत्नशीलः नरः प्रवृत्तिं पुनरेति तस्मिन्।। १३।।

# मोक्षः

मोक्षार्थं यतते नरो बहुविधो बद्धो महाबन्धने
विद्या चापि विमुक्तये निगदिता शास्त्रेषु सर्वेषु च।
नानादर्शनतत्त्वतोऽस्ति गदितं ज्ञानाच्च मुक्तिर्यथा
मोक्षो मुख्य इति प्रधानवचनं पुंसां हि लक्ष्यं स्मृतम्।। १।।

भक्ताः भक्तिभरान्विताः नवविधाः कुर्वन्ति भक्तीश्चिरं
धर्मान् ये सकलान् विमृश्य सुधियो यत्नं सदा कुर्वते।
दत्त्वा दानमुपासते व्रतरताः देवान् सदा सादरं
तेषां लक्ष्यमिदं सुचिन्तिततरं कैवल्यमेकं ध्रुवम्।। २।।

सर्वं दुःखमिदं सखे सुखमहो दुःखस्य मूलं मतं
सौख्यञ्चापि समिश्रितं बहुविधैर्दुःखैः सदा ज्ञायताम्।
ज्ञानादेव समस्तदुःखशमनं बन्धस्य नाशस्तथा
मोक्षः सर्वहितो हि शास्त्रगदितो लब्धुं जनैर्यत्यताम्।। ३।।

तीर्थं यज्ञमथापि पुण्यमखिलं गङ्गावगाहस्तथा
दानं भक्तियुतार्चनं भगवतः नानाः क्रियाः पुण्यदाः।
धर्मं नित्यपरोपकारकरणं योगादिकर्माणि च
यद् यत्कर्म करोति धर्मनिरतो मोक्षार्थमेव ध्रुवम्।। ४।।

आत्मोद्धारपरायणाः बहुजनाः सन्त्यज्य गेहादिकं,
नानापर्वतगह्वरेषु विरता ध्यानस्थिता योगिनः।
बुद्धाद्या बहवो विहाय विभवं भिक्षाटनञ्चाश्रिताः
मोक्षार्थं खलु जीवनं यदि भवेत् दुःखस्य नाशस्तदा।। ५।।

नानाकष्टमवाप्य चार्जितधनं त्वन्यायमार्गेण च,
बन्धून् मातृसहोदरानथ पुनः स्वात्मीयलोकान् तथा।
सन्त्यज्यैव धनार्जने प्रतिदिनं मोहान्धकारान्विताः
नूनं गर्त्तमवाप्य यान्ति नरकं मुक्तिं न चाप्तुं क्षमाः।। ६।।

दीनाश्चापि परोपकाररसिकाः स्वार्थं विहायैव ये,
नानाक्लेशमवाप्य संविदधते नित्यं परार्थं यदि।
नूनं ते पुरुषाः भवन्ति भुवने सर्वत्र सम्मानिताः
त्यक्त्वा देहमिमं प्रयान्ति सदनं विष्णोः परं शान्तिदम्।। ७।।

बौद्धा ये क्षणभङ्गवादरसिका निर्वाणसम्प्राप्तये,
सांख्या ये प्रकृतेर्वियोगमखिलं कैवल्यमाहुः सताम्।
ध्यानावस्थितयोगिनोऽपि सततं वाञ्छन्ति मुक्तिं परां,
ब्रह्मज्ञानविचारणे मतिमतां सायुज्यमोक्षः पुनः।। ८।।

जीवाः मोहवशाद् भ्रमन्ति भुवने जानन्ति लक्ष्यं नहि,
दुष्टाः पापरताः भवन्ति मनुजाः पाशेषु बद्धाः ध्रुवम्।
ज्ञात्वैवं सुविवेकिनो बुधवराः शास्त्रेषु प्रोचुः सदा
येन स्यान् नितरां क्षितौ खलु नृणां मुक्तिः सदा बन्धनात्।। ९।।

प्राज्यं राज्यं वृथा स्यात् भवति न यदि तच्छान्तिदं सौख्यरूपं,
कैवल्यं मुख्यलक्ष्यं बहुबुधगदितं श्रेष्ठमेकञ्च पुंसाम्।
भक्ताः योगीन्द्रवर्याः नरवरसुधियश्चिन्तने श्रेष्ठमार्गे,
श्रेयस्ते वै लभन्ते भगवति निरताः मानवाश्चान्तकाले।। १०।।

# चिन्तन—पञ्चाशिका

नानादुःखकरं समर्जितधनं चित्ते बुधैर्धार्यतां,
दुःखं सर्वमवेहि मूढ़मतिमन्! नो बिन्दुमात्रं सुखम्।
अर्थोऽनर्थकरो बुधैश्च गदितो बन्धस्य मूलं ध्रुवं
रागद्वेषविबर्धकं सुखमिदं तच्चिन्तनीयं जनैः।। १।।

रोगा नैकविधा भवन्ति सततं भोगा विपन्मूलकाः,
देहे कष्टमहर्निशं बहुविधं सौख्यञ्च दुःखप्रदम्।
आयुश्छिन्नघटाम्बुवत्प्रतिलवं संक्षीयते प्राणिनां
मोहं यत्र निरर्थकं प्रकुरुते लोकेषु नित्यं जनः।। २।।

दुःखार्त्ता जननी जरातुरतमो वृद्धः पिता क्रन्दति,
भ्राता ते विमुखः सखा च मलिनः रुष्टाः प्रिया बान्धवाः।
पुत्रो मूर्खशिरोमणिर्धनवशाद्धूर्तः खलो लम्पटो
नानावञ्चनसञ्चितं तव धनं कष्टस्य मूलं सदा।। ३।।

वातान्दोलितदीपरश्मिसदृशी श्रीचञ्चला कीर्तिता
तां सम्प्राप्य नु मोदसे प्रिय! सखे! तन्नोचितं सर्वथा।
नानाक्लेशवशादसावधिगता संरक्षणे कष्टदा
नूनं यास्यति सा चला च चपला सन्त्यज्य भोः दुर्मते।। ४।।

यस्माद्बन्धुजनाः प्रिया च पितरः सर्वे प्रसन्ना जगु—
र्मोहे यस्य मदान्ध एव सततं सज्ज्ञानशून्यो जनः।
नानापापरतोऽपि यत्प्रतिदिनं सम्प्रातुकामो यदि
हा कष्टं न तथापि तिष्ठति चिरं विद्युत्समं तद्धनम्।। ५।।

यस्यास्ते कमला धनी स कुरुते श्लाघां स्वकीयां मुहु–
र्मोहान्धः सततं धनस्य बहुधा वृद्ध्यै करोति श्रमम्।
ग्रीष्मादिव्यसनं प्रसह्य निरतो लक्ष्मीं चलां रक्षितुं
शक्तो नैव कदाप्यभूच्च भुवने धिक् तां कृथाः निर्दयाम्।। ६।।

संसारेऽस्मिन् जनिमृतिजरातापतप्ता मनुष्याः
सम्प्रेक्षन्ते शरणमनघं दुःखतो रक्षणार्थम्।
नो तद्राज्यं न च नरपतिर्नापि कान्ता न बन्धुः
कालात् त्रातुं सकलशुभदो रक्षको धर्म एकः।। ७।।

प्राज्यं राज्यं सकलसुखदं कामदा वोऽस्ति कान्ता,
सौख्यं भोग्यं भवति सुलभं भोगभूम्यो रमण्यः।
एतत्सर्वं भवति शिवदं यावदेव स्वपुण्यं
क्षीणे पुण्ये मनुज! सकला यान्ति शून्यं सुखानाम्।। ८।।

कृत्वानेकाः कपटरचना आर्त्तदीनान् प्रपीड्य,
हत्वा तेषां धनमपि सखे! मोदसे त्वं प्रभूतम्।
मत्वा स्वीयान् परमसुहृदः त्रायसे पुत्रपौत्रान्
प्राप्ते कष्टे नरकगमने कोऽप्यलं रक्षितुं किम् ?।। ९ ।।

रम्येऽरण्ये हिरणशिशवः क्रीडया बंभ्रमन्ति
ग्रस्तः कश्चिन्मृगपतिमुखातिथ्यमाप्तः प्रकामम्।
धावन्त्यन्ये दिशि दिशि यथा प्राणरक्षार्थमेव
कालेनैवं त्वयि कवलिते त्रातुमन्यो न शक्तः।। १०।।

मूढस्त्वं नो सततमहितं चिन्तयस्यात्मनोऽपि
पापं पुण्यं गणयसि पुनर्नैव चिन्तां परेषाम्।
नूनं धूलिं क्षिपसि च शिरो मत्तनागेन्द्रवत्त्वं
किं ते पुत्रा शमनसदने भागभाजस्त्वया स्युः ?।। ११।।

रम्या रामा जनकजननीबान्धवा मित्रवर्गाः
रम्यं हर्म्यं विपुलविभवो यानमप्यस्ति येषाम्।
किं न ग्रस्ताः कुटिलचपलैः कालपाशैस्त एते
ज्ञात्वापि त्वं चपल! कुमते! पापमेवं करोषि।।१२।।

रागो यत्र विधीयते प्रतिपलं देहे प्रयत्नैर्जनैः
स्वादिष्टाशनपानयानविभवैर्नक्तं दिवं यापितम्।
मृत्या तज्जरया रुजा च गलितं दृष्ट्वा शरीरं क्षणात्
गर्वं मा कुरु मा कुरु स्ववपुषः कस्यास्ति तत्सुस्थिरम्।।१३।।

येषां राज्यसुखं विभूतिरतुला सैन्यं दृढ़ं सर्वथा
ते वीराश्च महाबला मृतिमगुर्भूमण्डलाः खण्डलाः।
नष्टास्ते भरताग्रजादिसदृशा रामादयो विश्रुताः
पाताले धरणीतले नभसि वा नास्त्येव कश्चित्स्थिरः।।१४।।

रे जानीहि जरातिजीर्णपुरुषं दृष्ट्वा च रोगाकुलं,
नो युक्तं परदुःखदं कुकथनं गर्वोद्धतं ते वचः।
ते कालोऽस्ति समागतोऽस्ति निकटं प्राणाञ्च हर्तुं प्रियान्
सन्ध्यारागवदेव यौवनमिदं कस्यापि नैव स्थिरम्।।१५।।

भव्यं सौधतलं प्रियाश्च सुहृदः भार्या मनोहारिणी
क्षेत्रं वाहनमाशु नश्यति सखे! सर्वं प्रियं नश्वरम्।
नेत्रे मूढ़! निमीलिते तनुरियं ते नास्ति किं चापर–
मित्थं सर्वमवेहि यौवनधनं व्यर्थं प्रियं तेऽहितम्।।१६।।

यां पाणिग्रहलालितां शशिमुखीं प्राणप्रियां वल्लभां,
धृत्वा नैव विचार्यते गुरुवचः पापेषु लग्नैर्जनैः।
सा कान्ता विमुखीं गता जड़मते किं शोचसे रे सखे!
नैषा केन सुरक्षिता हि सततं योषापि नो सुस्थिरा।।१७।।

असारे संसारे विषयनिरतो जीवनिवहः–
सदा सोढ्वा क्लेशं जनिमृतिजराजन्यमखिलम्।
परावर्त्तानन्त्यं विधिविहितयोनौ प्रकुरुते
भवाब्धेः पारं किं तदपि लभते कर्मवशतः।।१८।।

ध्रुवं जीवः सक्तः सपदि सहते कर्मवशगो
व्यथाः सर्वाः पीड़ाः परवशतया कायजनिताः।
कुकर्मारब्धोऽसौ नरककुहरं याति सहसा
सुकर्माभ्यस्तो यः त्रिदिवसुखभोगं प्रकुरुते।।१९।।

अयं जीवो जातः सुरपतिरथैवं मृगपतिः
कदाचिच्चाण्डालो नृ–खग–मृगयोनौ च रमते।
अशान्तो भ्रान्तो यः क्वचिदपि न शान्तिं स भजते
न यावत्प्रारब्धं शमयति हि भोगं न सकलम्।। २०।।

पिता पुत्रो जातो भवति जनकः पौत्रसदृशः
प्रिया माता भूता सपदि वनिता वाथ दुहिता।
विचित्रे लोकेऽस्मिन् रचयति विधिः सर्जनविधिं
न कश्चिज्जीवोऽसौ प्रभवति परिज्ञातुमखिलम्।। २१।।

लभन्ते पोताद्यैः कथमपि नरः पारमुदधेः
भुवोऽप्यन्तं प्राप्तुं भवति जवयानेन सुलभम्।
अरण्यानामन्तं द्विरदतुरगैर्यान्ति मनुजाः
भवस्यान्तो नैवं विपुलतरयत्नेऽपि विहिते।। २२।।

सुगानं यत्राभूद्विविधलयतानेन सहितं
गृहे तस्मिन् दृष्टं युवसुतमृतौ रोदनमहो।
क्षणे सौख्यं लभ्यं भवति सहसा दुःखमतुल–
मसारे संसारे सुखमपि सदा दुःखवलितम्।। २३।।

जनः कश्चिद्भुंक्ते गदजनितदुःखं प्रतिपलं
पुनः कशचिच्चान्यो विरहजनितं मानसमिह।
अपारे संसारे क्वचिदपि सुखी नैव मनुजो
दरिद्रोऽन्यः कश्चिद्विषमिव विपत्तिञ्च सहते।। २४।।

क्वचिद्राज्ये युद्धं प्रचलति जनप्राणशमनम्
महामारी क्रुद्धा भवति विकराला नरहरी।
क्षुधा–तृष्णापूर्णा विपदपि च दुर्भिक्षजनिता
तपत्तापज्वालाभरितभुवने क्वास्ति शरणम्।। २५।।

रिपुकुलशशिराहू राघवेन्द्रो नरेन्द्रो
विविधदनुजहन्ता कृष्णरूपो मुरारिः।
शशि–रवि कुलभूपाः भोजमीमादिरूपा
मरणमुपययुस्ते रिक्तहस्ताः समस्ताः।। २६।।

युवतिजनसुलीलां प्रेमलीलां विचित्रां
सुखमयपरिहासं भासमानं विलासम्।
त्यज सुहृदतिशीघ्रं पाशरूपं समस्तं
नहि नहि सुखभोगः शान्तिमार्गे सहायः।। २७।।

विपुलविभवभावो रम्यभोग्योपहारः
चिरपरिचितचित्तो वित्ततृप्तोऽथ पुत्रः।
सुजनपरिजनास्ते मृत्युकाले वृथा स्यु–
र्भवति तव सहायो कर्मधर्मानुमार्गः।। २८।।

तव धनमतिदूरं तिष्ठति स्त्री सुदूरं
प्रलपति तव माता दूरतस्त्वां निरीक्ष्य।
सुहृदपि हतभाग्यो याति नूनं श्मशानं
तनुरपि दहनान्ता मृत्युमार्गे त्वमेकः।। २९।।

धनजन परिपूर्णानन्तकालेऽसहायान्
यमसदनगतांस्तान् प्राणिनो वीक्ष्य लोकाः।
विदधति नहि चेतः रागबद्धं तथापि
जहति नहि ममत्वं कामदं बन्धमूलम्।। ३०।।

मम गृहमतिरम्यं भव्यभाग्यं ममेदम्
अभिनव–सुखवाद्यं यानसौख्यं मदीयम्।
सपदि तव मृतिश्चेन्नास्ति किञ्चित्सहायं
चर नर! भुवि धर्मं शान्तिमार्गप्रकाशम्।। ३१।।

देहस्य जन्म मरणञ्च जरा च रोगा
भोगा भवन्ति पुरि नैव च देहिनः स्युः।
कर्मानुसारमिति भाग्यफलानि मत्वा
चिन्ता त्वया नहि कदापि वृथा हि कार्या।। ३२।।

जानीहि बान्धव! कुतस्त्वमुपागतोऽसि,
भ्राता पिता च जननी तव के च ते स्युः।
वृक्षं यथा खगगणास्तु समाश्रयन्ति
लोका जगत्यथ तथैव वसुन्धरायाम्।। ३३।।

यानं न गोगजहयादिधनं त्वदीयं
रम्यं न सौख्यसदनं नहि वाटिकास्ते।
नेदं सखे! किमपि कस्य जनस्य नित्यं
नो वा जनोऽपि भुवने नियतश्च कश्चित्।। ३४।।

नूनं विभावय सुहृत् क्षणिकं शरीरं
मांसास्थिशोणितयुतं घृणितं पुनश्च।
आत्मैव नित्य इति चिन्तय मूढ ! बन्धो !
आत्मैव देह इति धीरमतेर्विवेकः।। ३५।।

देह: कृश: भृशमनल्पमनेकदु:खम्,
चिन्तां वृथा नहि कृथा: सुविचार्य सर्वम्।
नाशो न जीवनिवहस्य कदापि दृष्ट:
आत्मा सदैव विमलोऽजरतामुपेत:।। ३६।।

बाल्ये शास्त्रमधीत्य येन सकलं पीतञ्च शास्त्रामृतम्
कौमारे गुरुकार्यचिन्तनपरस्त्यक्त्वा स्वकीयं सुखम्।
गार्हस्थ्ये स्वकुटुम्बपोषणपर: पित्रोश्च सेवारत:
येनेत्थं समनायि जीवनमहो तज्जीवनं जीवनम्।। ३७।।

दुष्टानां दलनाय जीवनमहो किं स्वोदरापूरणै:
साधूनामभयं विधाय सुधियो वीराश्च धीरास्तथा।
सोढुं कष्टमजस्रमाशु भुवने दक्षा: सदा साधव:
ये कुर्वन्ति नरा: परोपकरणं तज्जीवनं जीवनम्।। ३८।।

नो कुत्रपि कदापि दुष्टसदने भुक्तं विषं भोजनं
नो येनातिकठोरघोरसमये त्यक्तं स्वधैर्यं बलम्।
येनेदं सकलं परार्थकरणे त्यक्तं धनं जीवनम्
लब्धं तेन सुधामयं ननु फलं तज्जीवनं जीवनम्।। ३९।।

येनाकारि सदा सतामनुकृति: कार्येषु सर्वेष्वपि
येनाचारि व्रतं हि सत्यकथने ह्यापद्गतेनापि वा।
कामाविष्टहृदा न येन वनिता दृष्टा परा कर्हिचित्
येनाधारि हरि: स्वकीयहृदये तज्जीवनं जीवनम्।। ४०।।

कीर्त्या योऽस्ति महीतले सुविदित: सर्वत्र सम्मानित:
कार्याकार्यविचारशीलतनयो भाग्येन दानी पुन:।
कर्त्तुं वंशसमुन्नतिं बहुविधां नक्तंदिवं चिन्तक:
धन्य: सोऽस्ति महीतले नरवर: पूज्यश्च वन्द्य: सदा।। ४१।।

सोढ्वा क्लेशचयं न यो विचलितः सन्न्यायमार्गात्क्वचित्
हर्त्तुं कष्टमहर्निशं प्रयतते प्राणैस्तु पित्रोस्तथा।
ईर्ष्या–द्वेष–विगर्हणाविरहितो देशोन्नतौ चिन्तकः
नूनं रत्नमसौ सदा क्षितितले सर्वत्र सम्मानितः।। ४२।।

यो देशस्य विभूषणं मतिमतां श्रेष्ठः स्वकीयैर्गुणैः,
सत्यासत्यविवेकशीलनपरो दीनार्थचिन्तारतः।
लोकानां कुशलं सदैव कुरुते देशप्रियो मानवः,
कीर्तिर्यस्य दिगङ्गनाङ्गनिकरे सर्वत्र विद्योतते।। ४३।।

विद्यावैभवभूषितो बुधवरो विज्ञः सदा धार्मिकः
लोकाचारविचारचारुचतुरो भास्वत्प्रतापावलिः।
सत्कीर्त्यावनिमण्डले गुणिगणे ख्यातिञ्च विस्तारयन्
धन्यः कोऽपि महीतले खलु जनः संदृश्यते भाग्यतः।। ४४।।

प्राप्यापि गौरवपदं न करोति गर्वं
साम्राज्यशक्तिवलितोऽपि न दम्भभाग् यः।
सम्प्राप्य वित्तमपि नैव कदापि मानी,
दानी सदैव भवति प्रथितः स लोके।। ४५।।

नीत्या लोकहितं विचिन्त्य बहुधा सोढ्वा च दुःखं मुहुः
कारागारमनेकधापि विपुलं क्लेशं च शोकन्तथा
यो धीरो न कदापि दैन्यवलितो लक्ष्यैकमात्रे दृढ़ो
धन्यः सोऽस्ति विभूषणं भुवि चिरं कीर्त्या ध्रुवं जीवति।। ४६।।

सदा सत्याहिंसाव्रतरतजनो नोदनकरो
विजिष्णुः सन्नेता दलितजनबन्धुः करुणया।
महामान्यो धीरो विविधनयविज्ञानकुशलः
भवत्येवं कश्चित् प्रथितगुणयुक्तो नरवरः।। ४७।।

लोकामोदी कमलवदनो दिव्यकायो धरायां
दीव्यत्कीर्त्या मतिललितया ख्यातिलब्धो जनो यः।
तेजोधामा महितमहिमा लोकवन्द्यो विवेकी
धन्यः पूज्यो भुवनविदितो दुर्लभो ना धरायाम्॥ ४८॥

रे रे मानव सावधान मनसा पथ्यं ध्रुवं श्रूयतां
लोकेऽस्मिन् शुभकर्म एव सततं कर्त्तव्यमिष्टं त्वया।
याते चेतसि नष्टमेव सकलं लोके सदा चिन्त्यतां
पापाचाररतास्तथापि मनुजा आयान्ति लोके मुहुः॥ ४९॥

यावत्ते शिथिलं न यौवनमिदं यावच्च शक्तिस्त्वयि,
यावत्प्राणसमन्वितं तव वपुः यावच्च चिन्तामतिः।
तावद्दीनकृपालवो भव सखे! भक्तिं च देवे कृथाः
नूनं श्रीजगदीश एव शरणं प्राणान्तकाले यतः॥ ५०॥

वारं वारं जननमरणं दुःखमूलं समेषां
स्मारं स्मारं भवभयमयं भारभूतं शरीरम्।
हारं हारं सकलमनघं कर्मपाकानुकूलं
ज्ञानं कृत्वा चर जड़मते! श्रेयसो वर्त्मनि त्वम्॥ ५१॥

लोकानामनुरञ्जनाय जगतो निःश्रेयसे प्राणिनां,
नानादुःखनिमग्नदीनसरणिं मुक्तिप्रदां ज्ञानदाम्।
ब्रह्मानन्दरसैरुमारमण झाा संचिन्त्य युक्तं वचः
आर्त्तानन्दकरीं मुदा व्यरचयद्वैराग्यपञ्चाशिकाम्॥ ५२॥

सदा धर्मं समृत्वा जनिमृतिजरातापशमनं,
विवेकग्रन्थेऽस्मिन् भवभयहरं मुक्तिजनकम्।
पुमर्थानां प्राप्त्यै जगति चिरशान्त्यै जनिभृता–
मुमानाथेनेदं व्यरचि रुचिरं ह्यर्थशतकम्॥

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य–विद्यावाचस्पति डा उमारमणझाशर्मविरचितायां विवेकसहस्र्यां पुरुषार्थशतकं सम्पूर्णम्।

# विवेक–साहस्री

## ५. राष्ट्रशतकम्



इयं पुण्या भूमिर्भवति जननी मोदभरिता
अहं पुत्रोऽस्म्यस्याः सततमनुरक्तो निजभुवि।
अहो धन्यं राष्ट्रं विविधधनयुक्तं गुणमयं
समो नैवं देशो सकलभुवने क्वापि सुखदः।।

# राष्ट्र–प्रेमा

न रोषो द्वेषो वा जनमनसि कोपो नहि यथा
न दुःखं सन्तापो भवतु कलहो वा कथमपि।
तथैवं सर्वेषां भवतु शुभयत्नः प्रतिगृहं
समृद्धं राष्ट्रं स्यादिति हृदि जनानां विकसतु।। १।।

न भेदो जातीनां कथमपि पुनः प्रान्तपरता
न भेदो धर्माणां नहि च जनचित्ते छलमपि।
न रागो द्वेषो वा भवतु निजधर्मे सिखमते
न वा बौद्धे क्रीस्ते कथमपि च मोहम्मदमते।। २।।

सदाचारा मार्गाः सकलजनसौहार्द्रभरिता
परार्थं सर्वेषां भवतु खलु यत्नः प्रतिदिनम्।
गुरूणां सत्कारो भगवति सदा चास्तु भजनं,
समेषां नः श्रेयो भवतु सततं भारतभुवि।। ३।।

पिकानां संलापो मधुकरततीनां निनदनं
शुकानां खञ्जानां श्रुतिसुखदनादो मधुरसः।
मयूराणां नित्यं जनयतु मुदं चेतसि भृशं
ध्रुवं देशे सर्वं भवतु सुखदं शान्तिवलितम्।। ४।।

धराधाराः साराः सरससलिला सूर्यतनया
तथा गङ्गा दिव्या हरशिरसि हासं प्रकुरुते।
सलीलं कावेरी वहति च सुगोदा त्विह भुवि,
अनेका नद्यश्च ददति शुभदं तीर्थ–सलिलम्।। ५।।

पुनात्यम्बा गङ्गा हरशुभजटातश्च धवला
सलीला सिञ्चन्ती भरतभुवनं पावनकरी।
लिखन्ती गच्छन्ती सगरकुलकीर्त्तेः गुणगणं
सुधाधारासारैर्हरति कलुषं पापमनिशम्।। ६।।

पुनन्ती या लोकान् कलुषहरणी जह्नुतनया,
हरिद्वारात्काशीं सरति सुरसा पावननदी।
जनानां सन्तापं हरति सुखदा सेचनकरी
मृतानां गङ्गेयं भवति शरणं मुक्तिजनकम्।। ७।।

या कोटिशोऽखिलजनान् परिपालयन्ती
अन्नैर्जलेन च तथा विविधैश्च भोगैः।
सन्मारुतैः सततमात्मसुतान् समस्तान्
मातेव रक्षति सदा खलु सा धरित्री।। ८।।

देशेऽस्मदीये विविधाश्च धर्माः
नाना विचारा मनुजा विचित्राः।
कर्माणि तेषां पृथगेव नूनं
तथापि सर्वे मिलिता रमन्ते।। ९।।

राष्ट्राधिपो लोकपतिश्च कोऽपि
धर्मावलम्बी भवितुं स्वतन्त्रः।
प्रजाजनानां च चकास्ति तन्त्रं
स्वतन्त्रराष्ट्रे निखिलं स्वतन्त्रम्।। १०।।

स्वदेशरक्षाव्रतिनो युवानो
वृद्धाश्च बालाश्च सदैव यूयम्।
अखण्डतायै निजमातृभूमेः
प्रगाढ़धैर्यं कुरुतात्मशक्त्या।। ११।।

इयं पुण्या भूमिर्भवति जननी मोदभरिता
अहं पुत्रोऽस्म्यस्याः सततमनुरक्तो निजभुवि।
अहो धन्यं राष्ट्रं विविधधनयुक्तं गुणमयं
समो नैवं देशो सकलभुवने क्वापि सुखदः।। १२ ।।

सुदेशो वीराणां धवलयशसा भारतमिदं
धनं धान्यं रत्नं सपदि सुलभं यत्र सततम्।
सुपुण्यं सत्क्षेत्रं भरतभुवनं पावनतमं
परं धाम प्रेम्णां सुरवरनुतं भक्तिभरितम्।। १३ ।।

## भारत–प्रशस्तिः

सत्कलालालितं सत्कथाशोभितं
भक्तभावान्वितं शान्तिदूतं सदा।
धर्ममोक्षप्रदं भावनासंयुतं
भारतं भाति विश्वे सदा सत्कृतम्।। १ ।।

मोदतां भारतं ज्ञान–पुञ्जान्वितं
वर्द्धतां भारतं वीरपुत्रैर्युतम्।
राजतां भारतं स्वर्णरत्नैः सदा
भासतां भारतं भव्यभावान्वितम्।। २ ।।

भारते लोकसेवापरं जीवनं
भारते विश्वबन्धुत्वभावः सदा।
भारतं सर्ववन्द्यं सदा भूतले
भारतं भाति लोके सदा पूजितम्।। ३ ।।

देववृन्दैः सदा प्रार्थितं भारतं
मानवेन्द्रैः सदा शोभते भारतम्।
रम्यशोभान्वितं ज्ञानगङ्गायुतं
भारतं भाति विश्वे सदा वन्दितम्।। ४।।

विश्वनाथः सदा राजते भारते
वैष्णवी चास्ति पूज्या समस्तैर्जनैः।
वेङ्कटेशो महाकालनामा शिवः
स्वर्गमोक्षप्रदाश्चामरा भारते।। ५।।

## भारत प्रशंसा

शिष्याय प्रपदेऽनुरक्तिवशतः पार्थाय यो दत्तवान्
गीताज्ञानसुधामयं भयहरं मोहान्धकारापहम्।
नानारूपधरो हरिर्व्रजकुलं योऽत्रायतोग्रापदः
गोविन्दाय नमोऽस्तु विश्ववपुषे राष्ट्रस्य चोद्धारिणे।। १।।

नानाशास्त्रविचारदक्षविबुधाः सत्तापसा योगिनः
धर्मिष्ठाश्च परोपकारकुशलाः वीराश्च धीरास्तथा।
यत्रासन् नृपसत्तमा जनहिते मग्नाः प्रजापालकाः
तं वन्दे भुवि भारतं च सततं विद्यायशोवर्धकम्।। २।।

नानाधर्ममतानुगान् सुमचयान् माल्ये यथागुम्फितान्
राष्ट्रस्नेहमये च भावभरितान् सूत्रे जनान् कारयन्।
श्रेयः–प्राप्ति–समुन्नतान् बहुविधं विद्योतयन् भास्वरः
नूनं भारतदेशभूमिमहिमा सर्वत्र राराजते।। ३।।

# भारत–प्रशस्तिः

श्रीरामचन्द्रो रघुवंशनाथो लीलावतारो यदुवंशपूज्यः।
स्वजन्मनाऽभूषयतां स्वराष्ट्रं तद्भारतं भाति भुवि प्रशस्तम्॥ १॥

अखण्डमेकं भरतस्य राज्यं गङ्गार्कजाशीतलवारिपूतम्।
वेदादिमन्त्रध्वनिनावदातं तद्भारतं भाति भुवि प्रशस्तम्॥ २॥

श्रीशङ्कराचार्यपदेन पूतं रामानुजाचार्यमतेन धौतम्।
निम्बार्क–माध्वादिनयास्तु यत्र प्रक्षालयन्त्याशु समस्तपापम्॥ ३॥

श्रीगौतमाख्यौ प्रथितौ मुनीन्द्रौ न्याये च बौद्धे च सदा प्रशस्तौ।
पतञ्जलिर्यत्र पदे च योगे सांख्ये महात्मा कपिलो बभूव॥ ४॥

तीर्थानि पूतानि शतं सुराणां नद्यः पवित्राश्च वहन्ति यत्र।
पीठानि शक्त्याश्च बहूनि यस्मिन् तद्भारतं भाति भुवि प्रशस्तम्॥ ५॥

महर्षयो यत्र विचारदक्षाः ग्रन्थानकार्षुः परलोकमाप्तुम्।
दैत्यैरमर्त्यैरपि गीयमानं, तद्भारतं भाति भुवि प्रशस्तम्॥ ६॥

कावेरी च सरस्वती त्रिपथगा गोदावरी नर्मदा,
कालिन्दी च वितस्तता रसवती कौशीतकी वाग्वती।
कोशी–सिन्धु–शतद्रु–चन्द्रसुभगाः कृष्णा वहन्ति क्षितौ
वन्दे तं भुवि रत्नतुल्यमनघं देशं परं पावनम्॥ ७॥

यत्राभूद्धरणीतले रणभटो राणाप्रतापोद्भटः
लक्ष्मीबाइसमाश्शतं रणप्रिया धीराश्च वीराङ्गनाः।
पृथ्वीराज–शिवादिभूमिपतयः शूलाः रिपूणां कृते
वन्दे तं भुवि दुर्लभं सुललितं वीरैस्सदा शोभितम्॥ ८॥

यन्नासीद्भुवि हर्षदेवनृपतिः श्रीभोजराजो महान्
दक्षो लक्ष्मणसेन–भूपतिरभूच्छस्त्रे च शास्त्रे तथा।
विश्वामित्रवशिष्ठगौतमसमास्तत्त्वार्थविज्ञाः पराः
तं देशं भुवि दुर्लभं सुरुचिरं वन्दे परं भारतम्।। ९।।

यस्मिन् राष्ट्रे कविकुलगुरुः कालिदासश्च बाणो
व्यासो माघो सरसकवयो भारविर्भासहर्षौ।
विद्यारण्ये मृगपतिसमाः प्राभवंस्तत्त्वविज्ञाः
सोऽयं देशो जनकतनयाजन्मना पातितश्च।। १०।।

यत्राजाद–खुदी–पटेल–तिलकाः प्राणैर्यशो लेभिरे
गान्धी चाजनि यत्र धर्ममहिते सत्यस्य मार्गे दृढ़े।
तद्देशे सहसातिकम्पनकरो जातः सुभाषो महान्
तद्रत्नं भुवि भारतं बहुगुणं वन्दे च कीर्तिप्रदम्।। ११।।

बङ्गोत्कलासाम–बिहार–जम्मू–
काश्मीर पाञ्चालहिमाचलैश्च।
मध्यप्रदेशोत्तरकेरलैश्च
तद्भारतं भाति समस्तमेकम्।। १२।।

आन्ध्रेण मद्रेण महीशुरेण
प्रान्तैश्च पूर्णो विलसत्ययं यः।
सत्यस्य शान्तेश्च निधेश्च देशः
धन्यश्च पूज्यश्च सदा विभाति।। १३।।

राजस्थानं लसति भुवने गुर्जर–प्रान्तरत्नम्
आकैलाशं भुवनविदितं राष्ट्रमेकं त्वखण्डम्।
दिल्ली–मुम्बै–सदृशनगरैर्यस्य शोभातिरम्या
सोऽयं देशो ललितरुचिरो भारताख्यो विशिष्टः।। १४।।

महाराष्ट्रं राष्ट्रे लसति विमले सागरतटे
कुरुक्षेत्रं पुण्यं प्रथितहरियाणाख्य–विषये।
हरिद्वारं द्वारं सुरपुरमहायानसमये
प्रसिद्धा श्रीकाशी यमपुरभयाद्रक्षति जनान्।।१५।।

मेघालयो यत्र सदा विभाति
प्रख्यात–गोआ–दम–पाण्डिचेरी।
एवं विभिन्नैः सरसप्रदेशैः
रम्यं सुराष्ट्रं भुवने चकास्ति।।१६।।

प्रयागराजः कलिराजशत्रुः
काशीपुरी मोक्षकरी धरण्याम्।
गया सदा पैतृकपुण्यतीर्थं
विराजते भारतपुण्यभूमौ।।१७।।

केदार–बदरी–मथुरा–समेतं
नीलाचलस्थं जगदीश्वरञ्च।
रामेश्वरं द्वारवतीञ्च काञ्चीं
शृङ्गेरपुरं सततं भजेऽहम्।।१८।।

वीराङ्गना देशहिताय यत्र
लोकोपकाराय तनूस्त्यजन्ति।
यत्रेन्दिरासून् प्रियराष्ट्रमेकं
तत्याज कर्त्तुं सफलं समृद्धम्।।१९।।

आकाश्मीराद्भुवनविदितं कन्यकाक्षेत्रमेकम्
आसौराष्ट्रादपि विलसति प्रान्तभूतं समस्तम्।
एकं राष्ट्रं भरतभरितं भारतं सर्वपूज्यं
वन्दे वन्द्यं सुरमुनिवरैर्दुर्लभं मोक्षदञ्च।।२०।।

# प्रवर्धतां भारतराष्ट्रभाग्यम्

महर्षयो यत्र विचारदक्षाः लोकोपकाराय सदानुरक्ताः।
देवाः सदागत्य वसन्ति यत्र, प्रवर्धतां भारतराष्ट्रभाग्यम्।। १ ।।

स्वार्थैकलक्ष्यान् कपटान् समस्तान्, विद्रोहिणो भारतजन्मभूमेः।
निपात्य दुष्टान् दनुजान् सदैव, प्रवर्धतां भारतराष्ट्रभाग्यम्।। २ ।।

असून् स्वकीयान् तृणवच्च मत्वा, त्यजन्ति यस्याः परिरक्षणाय।
जागर्तु सा संस्कृतिरस्मदीया, प्रवर्धतां भारतराष्ट्रभाग्यम्।। ३ ।।

परस्परौद्धत्यविवृद्धवैराः, क्षतिं च ये राष्ट्रधनस्य कृत्वा।
लसन्ति चोच्चैः दमनेन तेषां, प्रवर्धतां भारतराष्ट्रभाग्यम्।। ४ ।।

प्रवृद्धमैत्र्या च जनाः यथा स्युः राष्ट्रे समस्ते सकलाः समानाः।
प्रवर्ततां राष्ट्रहिताय चित्तं प्रवर्धतां भारतराष्ट्रभाग्यम्।। ५ ।।

मर्मच्छिदं चातिघृणं करालं, परस्परं दुष्टविकारभावम्।
विधूय शीघ्रं जनमानसेषु प्रवर्धतां भारतराष्ट्रभाग्यम्।। ६ ।।

तन्त्रेषु मन्त्रेषु भृशं प्रवीणाः शास्त्रेषु सर्वेषु तथैव दक्षाः।
अत्राखिला ज्ञानरता यथा स्युः प्रवर्धतां भारतराष्ट्रभाग्यम्।। ७ ।।

पूर्णा च पृथ्वी मनुजाः प्रसन्नाः, दारिद्र्यरोगादिविवर्जिताश्च।
अज्ञानशून्या भुवि सन्तु सर्वे, प्रवर्धतां भारतराष्ट्रभाग्यम्।। ८ ।।

# राष्ट्रोन्नतिः

परस्परं प्रेमभरा नराः स्यु–
लोकास्समस्ताः सुखिनो यतः स्युः।
ज्ञानाग्निधौताः मनुजाः सुशीलाः
यथा भवेयुर्हि तथैव कार्यम्॥ १॥

लोकानुरक्ताः कपटादिशून्याः
चारित्र्यपूर्णाः परलोकचित्ताः।
भवन्तु ते नेतृगणाः समस्ताः
भूयात्तथेदं सुखदं स्वराज्यम्॥ २॥

एकं विशालं सफलं सुराष्ट्रं
कर्त्तुं समर्थाः वयमेव नान्ये
रामस्य राज्यं भवतात् समृद्धं
भूयात्समस्तं सुखदं विशुद्धम्॥ ३॥

तन्त्रेषु मन्त्रेषु विचारदक्षाः
ऋषि प्रकल्पाः भुवि तत्त्वविज्ञाः।
कुर्युर्यथा लोकहिताय चित्तं
तथैव साध्यं खलु भारतेऽस्मिन्॥ ४॥

सदैव गेहेषु पठन्तु सर्वे, गीर्वाणवाणीं सरसां सुभद्राम्।
तापत्रयत्राणकरीं धरायां, यतो भवेद्राष्ट्रमिदं पवित्रम्॥ ५॥

# देशरत्न—प्रशस्तिः

कीर्तिर्यस्य दिगङ्गनाङ्गलसिता स्वर्गेऽपि विभ्राजते
सुव्याप्तो धरणीतले गुणचयश्चाद्यापि जेगीयते।
श्रीमद्राष्ट्रपतेः स्वतन्त्रविषये चाद्यस्य पूज्यस्य च
श्रीराजेन्द्रबुधस्य धीधनपतेः वक्तुं गुणान् कः क्षमः।। १ ।।

"जीरादेई" लसति वसतिः सारणे मण्डले या
श्रीराजेन्द्रो जनहितकरस्तत्र लेभे जनिं स्वाम्।
सत्प्रान्तोऽभूदवनिवलये क्षेत्ररत्नं विहारः
धन्या पुण्या वहति सरयूः क्षेमदा यत्सकाशम्।। २ ।।

बाल्ये समग्रहीच्छीघ्रमुर्दूभाषाञ्च संस्कृतम्।
अन्याश्च विविधाः भाषाः स्वसंस्कारवशादसौ।। ३ ।।

राजवंशीं सतीं भार्यां राजेन्द्रः प्राप भाग्यवान्
यथा सीतामनुप्राप्य रामचन्द्रो मुदान्वितः।। ४ ।।

मृत्युञ्जयो यस्य सुतः सुशीलः धनञ्जयश्चापि कनिष्ठपुत्रः।
पिता महादेववरश्च धन्यः श्रीराजवंशी सुभगा च जाया।। ५ ।।

श्रीराजेन्द्रस्सुनयनिपुणो लोकमान्यस्स नेता
राष्ट्राध्यक्षो जनहितकरो गौरवं भारतस्य।
देशे रत्नं बहुगुणयुतं हीरकस्यापि मित्रं
स्वर्गस्थोऽसौ हरति भुवने क्लेशपुञ्जं जनानाम्।। ६ ।।

महीतले ते सुजना यशस्विनो
भवन्ति येषां परलोकचिन्तनम्।
महाजना लोकहितस्य चिन्तकाः
स्वभावतो रत्नसमा न चेतरे।। ७ ।।

स्वराज्यहेतोर्दृढ़बद्धचेता:, विचारसन्न्यायहितप्रदाता।
विलोक्य दीनां धरणीं प्रसाद: श्रीगान्धिनो मार्गमनुप्रपेदे।। ८।।

देशस्य कार्येषु सदानुलग्न:
निष्काम कर्मस्वनुबद्धचित्त:।
सुधामयीं देशहिताय प्रीतिं
प्रवाहयामास जनेषु ''रत्नम्''।। ९।।

कठोरदण्डैर्बहुशोऽपि दण्डितो
गौराङ्गदु:शासनकार्यकाले।
धैर्यं न तत्याज सदा प्रसन्नो
जनानुरागी सतु देशरत्नम्।। १०।।

स्वातन्त्र्यहेतोर्मनुजो गुणज्ञ:
समत्यजत् स्वीयसमस्तसौख्यम्।
महात्मनोऽसौ पदचिह्नमार्गात्
नैवाचलद्यो धृतिबद्धचित्त:।। ११।।

श्रीराजेन्द्रसमो धीर: श्रीराजेन्द्रसम: सुधी:।
श्रीराजेन्द्रसमो नेता न भूतो न भविष्यति।। १२।।

देशरत्न! नमस्तुभ्यं राजेन्द्राय नमोऽस्तुते।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।। १३।।

# सैनिक–संकीर्तनम्

धैर्योदारपराक्रमादिवलिता वीरोद्भटा: सद्भटा:
सन्नद्धा: कटिबद्धभावभरिता: राष्ट्रस्य संरक्षणे।
सन्त्यक्तुं निजजीवनं च सततं येषां न चिन्ता तथा
वन्द्यास्ते भुवि सैनिका गतभया: राष्ट्रस्य लोकैस्सदा।। १ ।।

स्वर्गं गच्छति शत्रुणा यदि हतो भुंक्ते च जित्वा सुखम्,
येषां चेतसि देशभक्तिरचला प्राणार्पणै: सर्वदा।
ते देवा नहि मानवा भुवि सदा वन्द्याश्च धन्यास्तथा
भक्त्या तान् प्रणमामि रक्षकवरान् राष्ट्रस्य सेवापरान्।। २ ।।

स्वातन्त्र्याय निजावने: कृतमती राणाप्रतापो महान्
देशत्राणरतो दयार्द्रहृदय: कर्त्तव्यसंरक्षणे।
संग्रामे कुजनान् नराधमपशून् देशस्य विध्वंसकान्
ये निघ्नन्ति तथा विधान् खलु नरान् वन्दे सदा तान् भृशम्।। ३ ।।

देशद्रोहकरान् कुकृत्यरसिकान् स्वार्थे रतान् दुर्जनान्
हन्तुं शत्रुवदेव ये विचलिता नैवाह्वे सैनिका:।
शत्रूणां भयवर्द्धिका गतभया: शूरा: सदा कीर्तिता:
ते वीरा: शिशुबालकैश्च वनितावृद्धादिभि: पूजिता।। ४।।

मित्रं पुत्रकलत्रबान्धवजनान् सन्त्यज्य चासून् प्रियान्
सर्वं भोग्यमनन्तसौख्यविभवं कर्त्तव्यनिष्ठा नरा:।
धीरा नैव कदापि लक्ष्यविमुखं वाञ्छन्त्यहो जीवनं,
धन्यास्ते धरणीतले नरवरा: सत्सैनिका: सुव्रता:।। ५।।

राष्ट्रं नो हृदयं सदैव शरणं प्राणाश्च नो जीवनं
राष्ट्रं रत्ननिधिः सदैव जननी राष्ट्रञ्च नः सत्पिता।
राष्ट्रं मित्रकलत्रपुत्रवनिताः राष्ट्रञ्च सर्वं स्वकं
येषां चेतसि देशभक्तिरचला ते सन्ति पूज्या नराः।। ६।।

## भारत प्रशस्तिः

आकाश्मीराद्भुवनविदितं कन्यकाक्षेत्रमेकम्,
आकैलाशं विलसतितरां प्रान्तभूतं समस्तम्।
एकं राष्ट्रं भरतचरितं भारतं सर्वपूज्यं
धन्यं पुण्यं विलसति महारत्नभूतं धरायाम्।। १।।

यत्राजाद–खुदी–पटेल–तिलकाः प्राणैर्यशो लेभिरे
गान्धी नूनमवातरच्च सहसा सत्यस्य मार्गे दृढः।
यद्देशे सहसातिकम्पनकरो नेता सुभाषो महान्
तद्रत्नं भुवि भारतं बहुगुणं वन्दे च कीर्तिप्रदम्।। २।।

यत्राभूद्धरणीतले रणभटो राणाप्रतापोद्भटः
'लक्ष्मीबाई' समाश्शतं रणप्रियाः वीराङ्गनाः सुस्त्रियः।
पृथ्वीराजशिवादिभूमिपतयः शूलाः रिपूणां कृते
वन्दे तं भुवि दुर्लभं सुललितं वीरैस्सदा शोभितम्।। ३।।

अस्यैव राष्ट्रस्य सुशोभितस्य
प्रान्ता विचित्राः विलसन्ति रम्याः।
तीर्थानि पूतानि नगाश्च नद्यः
वनानि सद्यश्च विनोदयन्ति।। ४।।

अस्त्युत्तरस्यां दिशि नाकभूमिः
कश्मीरराज्यं प्रथितं धरायाम्।
श्रीशारदाक्षेत्रमिति प्रसिद्धं
यात्राऽभवन्मम्मट—लोल्लटाद्याः।। ५।।

भूयाद्भारतराष्ट्रमेकमखिलं सत्यस्य तेजो महत्
वर्धन्ताञ्च सदा सतां मतिमतां लोकप्रियाः सत्क्रियाः।
सर्वत्रैव महीतले विलसतु द्राक् विश्वशान्तिः शुभा
इत्थं भारद्रवर्षमस्तु सततं सर्वै प्रतिज्ञायताम्।। ६।।

कौलेयकाः स्वमुदरं नहि पूरयन्ति?
काका बलिं प्रतिदिनं नहि किं लभन्ते?
धिग्जीवनं भुवि जनस्य निजोदरार्थं
धन्याः भवन्ति मनुजाः निजराष्ट्रचित्ताः।। ७।।

संवर्धिता सपदि येन तु मातृभूमिः
स्वार्थं विहाय मनुजेन परार्थभावैः
प्राणव्ययेन खलु यस्य परोपकारो
धन्यस्स पुण्यमनुजो भुवि कीर्त्तनीयः।। ८।।

न निम्नो न हीनो न दीनो न हेयः
न कोऽप्यास्ति लोके कदाचिद्धि तुच्छः।
इयं देशनीतिः विधिश्चाप्ययं तु
समे स्युः प्रजातन्त्रराज्ये समानाः।। ९।।

यस्मिन् जन्मनि राष्ट्रचिन्तनरतिस्तज्जीवनं जीवनं
यस्मिन् जन्मनि लोकचिन्तनमतिस्तज्जीवनं जीवनम्।
यस्मिन् जन्मति देशशान्तिविषये क्लेशोऽधिकः सह्यते
यस्मिन् जन्मनि चान्यमङ्गलकृतिस्तज्जीवनं जीवनम्।। १०।।

## जवाहरलालनेहरूः

साफल्यं समवाप्य तीव्रमतिमान् विद्यापरीक्षाविधौ
लब्धोपाधिसुपण्डितो बुधवरो नीतौ परं ज्ञानवान्।
विद्यावान् विनयी विचारचतुरः सत्कर्मनिष्ठः क्षिता–
वासीद्विज्ञजवाहरो मतिमतां श्रेष्ठश्च वन्द्यः सदा।। १ ।।

देशस्यास्य विभूषणं मतिमतां वृन्दैः सदा मण्डितः
सत्यासत्यविवेचनेऽतिनिपुणः दीनार्त्तचिन्तारतः।
लोकानां कुशलं सदैव कृतवान् देशप्रियः पण्डितः
मान्यो भक्तजवाहरो बुधवरः सत्पात्रमासीत्सदा।। २ ।।

सौन्दर्ये सुरुचिश्शुचिश्च वचने कार्ये तथा मानसे
यस्यासीत्सरला च वाङ्मधुमयी यो लोकपूज्यः सदा।
नानाग्रन्थनिबन्धलेखनपटुर्वक्ता विपश्चिद्वरः
मान्यो दिव्यजवाहरो नरवरो धन्यः स आसीत्सदा।। ३ ।।

द्रोहान्तकः परमसूक्ष्मविचारदक्षः
गौराङ्गलोकविजये च सदैकलक्ष्यः।
सन्तापशोकहरणेऽखिल राष्ट्रियाणां
दक्षो जवाहरवरो रिपुसर्पताक्ष्‍र्यः।। ४।।

प्रधानमन्त्री प्रथमश्च भारते
गुरुत्वमाप्तः खलु शान्तिसिद्धये।
स्वाधीनतायां कुशलो जवाहरो
जेगीयतेऽद्यापि सुधीः धरातले।। ५।।

यथा सुमेरुः विदितो नगानां
कांग्रेसिनां मध्यगतो गरिष्ठः।
सभापटिष्ठः सुधियां वरिष्ठः
जवाहरोऽसौ विदुषां विशिष्टः।। ६।।

कर्त्तुं देशं रिपुकरतलात्सर्वथा यः स्वतन्त्रं
सत्याहिंसारत इह सदाऽखण्डयद्बन्धनानि।
आंग्लेयानां महति दमने क्रान्तियज्ञस्य नेता
तेने लोके त्वभयवचनं कण्टकाकीर्णमार्गे।। ७।।

विद्यावैभवभूषितो बुधवरो विज्ञः सदा'पण्डितः'
लोकाचारविचारचारुचतुरो भास्वत्प्रतापावलिः।
नानादेशविदेशसंगतिविधौ चातुर्यमासाद्य यः
सन्मान्योऽस्ति जवाहरो भुवि सदा प्राप्यापि स्वर्गं बुधः।। ८।।

वाचा कोमलया सुधामधुरया सम्बोधयन् स्वाः प्रजाः
लोकानामनुरञ्जने मधुमतिः कारुण्यरत्नाकरः।
सत्कीर्त्यावनिमण्डले गुणिगणे ख्यातेश्च विस्तारकः
धन्योऽसौ हि जवाहरो द्विजवरश्चासीत् सतामग्रणीः।। ९।।

राष्ट्रैः रूसादिमुख्यैः सुदृढ़मभिनवं सख्यभावं व्यनैषीत्
शान्त्यर्थं व्यग्रचेताः नयजयकुशलः पञ्चशीलप्रणेता।
कीर्त्या लोके सुवीरः स्वमतिततिबलैः विश्ववन्द्योऽतिधन्यो
मन्त्री देशप्रधानः त्रिभुवनविदितो नेहरूः शान्तिदूतः।। १०।।

# पञ्चशीलम्

तस्यैव विज्ञस्य जवाहरस्य
कृतैर्विचारै ननु सत्प्रयासैः।
विश्वेष्वपूर्वं सुखमाकिरच्च
सत्पञ्चशीलं प्रथितं धरायाम्।। १।।

देशेन केनापि परं सुराष्ट्रं
सम्मानतो वर्तयितुं यतेत।
शीलं सुशान्त्यै च जगद्धिताय
निर्णीतमेवं प्रथमं सुशीलम्।। २।।

न कोऽपि कस्यापि तु शासनस्य
सिद्धान्तभेदेष्वपि सत्सु नीतौ।
क्षिपेन्न हस्तं परराष्ट्रनीतौ
शीलं द्वितीयं विदितं बभूव।। ३।।

मिथः समे स्नेहभराश्च देशाः
हिंसाप्रवृत्तौ न कदापि लिप्ताः।
भूयासुरित्थं च तृतीयशीलं
सुनिश्चितं विज्ञजनैर्विचिन्त्य।। ४।।

परस्परं प्रेमविवृद्धये तु
राष्ट्रेषु सर्वेषु समत्वनीतिः।
शीलं चतुर्थं सहजीवनञ्च
सुशान्तिपूर्णं खलु पञ्चमञ्च।। ५।।

# राजीव गान्धी

लोकानुरक्तो मतिमान् गुणज्ञः राजीवगान्धी सततं विलोक्य।
दुःखं च दीनार्त्तजनस्य खिन्नः अहर्निशं योऽकुरुत प्रयासम्।। १ ।।

स्वस्थः सुवक्त्रश्च सुनेत्रकर्णो वर्णेन गौरः सुजनो विशिष्टः।
प्रधानमन्त्री सुविचारदक्षः देशैक्यलक्ष्यो धनहीनबन्धुः।। २ ।।

भुङ्क्ते न भोगं भजते न सौख्यं देशस्य चिन्तां हृदये निधाय।
अहर्निशं भारतराष्ट्रमेकं कर्त्तुं प्रयत्नं यतते सुवीरः।। ३ ।।

दृष्ट्वा स्वमातुर्निधनं विचित्रं देशस्य घोरान्धदशां विलोक्य।
तत्याज धैर्यं न तथापि वीरः धीरो नु धत्ते हि धृतिं विपत्तौ।। ४ ।।

कांग्रेसनेता सततं विजेता नेता स्वदेशस्य गुणैर्विशेषैः।
प्राणव्ययेनापि जनस्य रक्षां कर्त्तुं व्यथा नास्ति कदापि चित्ते।। ५ ।।

राजीवगान्धी जनताहितार्थं स्वार्थं
ततो दुस्त्यजजीवनं च।
त्यक्त्वाञ्जसा ऽसौ प्रथितो मनस्वी
परार्थमेवास्ति सतां विभूतिः।। ६ ।।

मुदा राष्ट्रं नत्वा सुखदशरणं सत्यवलित–
मखण्डत्वप्राप्त्यै जगति सुखशान्त्यै जनिभृताम्।
विवेकग्रन्थेऽस्मिन् सकलजनतामंगलकरम्।
उमानाथेनेदं व्यरचि रुचिरं राष्ट्रशतकम्।।

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य–विद्यावाचस्पति डा उमारमणझाशर्मविरचितायां विवेकसहस्र्यां राष्ट्रशतकं सम्पूर्णम्।

# ६. सप्तपुरीशतकम्

१. अयोध्या
२. मथुरा
३. माया
४. काशी
५. काञ्चीपुरी
६. अवन्तिकापुरी
७. द्वारवती

श्रीरामो भगवानिहैव सहसा सम्प्राप्तकायो विभु
र्मर्यादापुरुषोत्तमो रघुवरो योऽवातरद्भूतले।
दुष्टानां दलनाय चात्र भगवान् धर्मस्य संरक्षणे
यत्रासीज्जनकात्मजापि परमा रामप्रिया जानकी।।

# १. अयोध्यापुरी

धन्यायोध्या सगरवसतिर्भारते मुख्यतीर्थम्
लेभे रामो जनिरिह विभुर्जानकीजानिरीशः।।
पुण्यं गण्यं जयति सततं तीर्थरत्नं धरायां
तत्रासंस्ते ऋषिमुनिवराः श्रीवशिष्टादिकल्पाः।। १।।

सत्ये मार्गे दृढ़मतिनरः श्रीहरिश्चन्द्रभूपः
जायां त्यक्त्वा तनयसहितां दुःखमाप प्रचण्डम्।
वंशे सौरे प्रथितयशसः शूरवीराश्च सर्वे
पुण्या धन्या वहति सरयूः यत्र देवा वसन्ति।। २।।

भक्तो रक्तो गुरुपदरतः पुत्रकामो दिलीपः
भक्त्या सेवां प्रतिदिनमहो गोश्चकाराथ भूपः।
सिंहद्वारा नृपतिहृदयं या परीक्ष्यैव तृप्ता
तस्माद्धर्मो जयति सततं भक्तिपूर्णस्त्विहैव।। ३।।

छायावद्यः सततमभवन् नन्दिनीपालने ना
गां सम्पातुं मृगपतिमुखात्स्वां तनुं त्यक्तुकामः।
तस्मात् पुत्रं रघुकलमणिः प्राप्य भूपो दिलीपः
मेने त्राणं पितृगणसतां गोर्गुरोश्चाशिषा यः।। ४।।

राज्ये यस्मिन् वचनविमुखो नैव राजा कदापि
प्राणान् त्यक्त्वा सुखमपि सदा यो न तत्याज वाचम्।
आसीद्रीती रघुकुलनृणां सत्यनिष्ठात्मिका धीः
तत्सत्यं वै युगमपि पुरा सूर्यवंशोद्भवानाम्।। ५।।

मर्यादापुरुषोत्तमो रघुवरो यत्राभवद्भूतले
पित्रोर्वाचमुदारभाववलितो योऽपालयत्सर्वदा।
त्यक्त्वा राज्यमिहैव तातवचनाद् योऽगाद्वनं सत्वरं
सायोध्या सुरपूजिता सुविदिता धन्या क्षितौ सर्वदा।। ६।।

श्रीलक्ष्मीर्जनकात्मजा पतिरता विस्मृत्य पित्रोः पुरी–
मत्रागत्य सदैव या पतिगृहे तुष्टा च सेवापरा।
गन्तुं वीक्ष्य पतिं सुघोरविपिनं सद्योऽनुमार्गं ययौ
वन्दे तत्पुरवासिनश्च सकलान् स्वर्गप्रदान्तां पुरीम्।। ७।।

भ्रात्रा यत्र विराजते स्म मतिमाञ्श्रीलक्ष्मणो भक्तिमान्
रामेणाथ जगाम घोर विपिनं संपद्विपित्योस्समः।
मेने यः सकलं सुखं परतरं भ्रातुश्च पादाम्बुजे
सायोध्या सततं सुकीर्तिवलिता धन्या क्षितौ राजते।। ८।।

तस्मिन् पुरे जन्ममहोत्सवे विभोः
सन्त्यज्य नाकं प्रभुदर्शनाय वै।
देवाश्च तीर्थानि मुनीन्द्रयोगिन
आयान्त्ययोध्यां भुवि भारते बुधाः।। ९।।

जन्मोत्सवेऽवधपुरे सुखदे समेषां
येषां विभौ रघुपतौ रतिरस्ति लोके।
आयान्ति ते भगवतः पदसेवनार्थं
नागाः खगाश्च सुधियोः मुनिदेववृन्दाः।।१०।।

धन्या पवित्रसुजला सरयूः नदीषु
स्नात्वात्र देवसहिता मुनयश्च सर्वे।
श्रीरामचन्द्रपदपद्मपरागपूताः
धन्या भवन्तिः मनुजाश्च महीतलेऽस्मिन्।।११।।

सम्प्राप्य भूमिमिह ये तु परित्यजन्ति
कायांश्च जीवनिवहा न पुनर्भवाय।
लब्ध्वा च शान्तिसरणिं भगवत्कृपातः
बैकुण्ठधाम पुरवासिन एव यान्ति।।१२।।

रागादिदोषरहिता पुरवासिनश्च
धन्याश्च ते खगमृगाः सहसागता ये।
रामं तथा दशरथं भरतादिकांश्च
स्मृत्वा भवन्ति तरसा सुखिनश्च सर्वे।।१३।।

विष्णोरंशस्त्वजनि भुवने यत्र रामो दयालुः
माया यस्य प्रथितयशसश्चागता यत्र सीता।
यत्रायान्ति प्रमुदितसुरास्तं विभुं द्रष्टुकामः
धन्यायोध्या प्रथमगणिता सप्तपुर्यां धरायाम्।।१४।।

भ्राता यस्यां भरतसहितो लक्ष्मणश्चातिभक्तः
शत्रुघ्नोऽसौ भगवति रतो मातरश्चापि धन्याः।
दासो धन्यः पवनतनयो यत्र देवा रमन्ते
धन्या भूमिर्विलसतितरां कीर्तियुक्ता त्वयोध्या।।१५।।

कौशल्या महिषी क्षिताविह मता चादर्शमाता सती
कैकेयी च चकार मार्गमिह या शस्तं प्रशस्तं विभोः।
धन्या सा च महीतले गुणवती माता सुमित्रा तथा
चाद्याशक्तिरिहैव संगतवती ताभिस्सती जानकी।।१६।।

विश्वामित्रपराशरादि मुनयः श्रीमद्वशिष्टादयः
नानादिव्यबुधाः शताधिकसुरा यत्रावसन् योगिनः।
द्रष्टुं रामविभुं परं परतरं श्रीवैष्णवाः सस्पृहाः
धन्येयं भुवि भारते सुविदिता दिव्या त्वयोध्या मता।।१७।।

श्रीरामो भगवानिहैव सहसा सम्प्राप्तकायो विभु
मर्यादापुरुषोत्तमो रघुवरो योऽवातरद्भूतले।
दुष्टानां दलनाय चात्र भगवान् धर्मस्य संरक्षणे
यत्रासीज्जनकात्मजापि परमा रामप्रिया जानकी।।१८।।

पुरायोध्या लोके भुवनविदिता देवनगरी
इदानीं तत्रैवं भवति कलहो लोकनिवहे।
अनर्थं व्यर्थं ये विगतमतयो यान्ति कलहं
सदा देवो रामस्त्ववतु सकलान् तांश्च मनुजान्।।१९।।

यायोध्या महिता पुराणगदिता वाल्मीकिवाचा स्तुता
यत्रास्ते सरयू पवित्रसुजला सन्तापशोकापहा।
पुण्या यत्र ययुर्मुनीन्द्रवलिताः सेन्द्रास्सुराः सर्वदा
तां दिव्यां सुखदां चराचरनुतां वन्दे त्वयोध्यां सदा।। २०।।

साकेतं भुवि रामदिव्यजनुषा स्वर्गायते सर्वदा
दिव्यं धाम पुरातनं सुविदितं श्रीजानकीमण्डितम्।
वृक्षाद्या मनुजा नगा खगमृगाश्चान्ये च ये प्राणिनः
सम्प्राप्ताः सकलाश्च दिव्यसदनं श्रीराघवेन्द्रैः समम्।। २१।।

अकारो ब्रह्मवाच्योऽस्ति यकारो विष्णुवाचकः।
धकारो रुद्रवाच्यश्च तत् त्रिदेवपुरी स्मृता।। २२।।

अयोध्यां मुक्तिदां दिव्यां पुरीं सर्वार्थदायिनीम्।
नौत्युमारमणो नित्यं सर्वदेवनुतां शुभाम्।। २३।।

# २. मथुरापुरी

धन्येयं मथुरापुरी सुविदिता श्रीकृष्णजन्मस्थली,

यत्रासीद्वसुदेवयादवपतिर्यो देवकी वल्लभः।

राज्यं यत्र चकार शासनवरः श्रीशूरसेनो नृपः

ख्यातो यो भुवि भोजराडिति गुणैः लोकेषु सम्मानितः।। १ ।।

धन्या सूर्यसुता नदी सुमहिता तत्रैव रम्यस्थले

कालिन्दी सुरसा सदा प्रवहते क्षिप्रं सुपुण्या क्षितौ।

यस्याः कुञ्जविहारिणो भगवतः कृष्णस्य लीलास्तटे

विष्णु—ब्रह्म—शिवादयोऽत्र मुदिता हर्षं परं लेभिरे।। २ ।।

नन्दो यत्र गुणेश्वरो नरवरो गोपालाको यो व्रजे

श्रीकृष्णः समुपालितो यदुवरः श्रीमद्यशोदासुतः।

लीलाञ्चाप्यकरोदुदारहृदयो यस्यां तु पुर्यां हरिः

वन्दे तां मथुरां सुकीर्तिवलितां राधान्वितां मुक्तिदाम्।। ३ ।।

आद्या या सुखदा परा भगवती शक्तिस्तु संमोहिनी

यन्मध्ये परमेश्वरी मधुमती श्रीराधिकाऽऽराधिता।

यां सम्प्राप्य रमेश्वरो मधुरिपुः कृष्णोऽतिरेमे मुहु—

स्तां धन्यां मथुरां क्षितौ भवहरां वन्दे सदा सादरम्।। ४ ।।

देवाश्चेन्द्रादयस्ते मुनिवरसहिता यच्च सम्प्राप्य तृप्ताः

आनन्दं पूर्णमापुः व्रजयुवकजनाः कृष्णरामादिभिश्च।

कुञ्जे गोपीभिरीशो रतिपतिरिव यो रन्तुमाप्तश्च वृन्दां

धन्यं पुण्यञ्च गुण्यं सुरमुनिविनुतं गोकुलं संभजेऽहम्।। ५ ।।

विप्राणां सनकादिसिद्धसदृशां व्यासादिदिव्यात्मनां
देवानाञ्च सुखावहं कुवलये नाकायते सर्वथा।
गोलोकाख्यमिति प्रसिद्धिसदनं यत्कीर्त्यते योगिभिः
तत्पुण्यं भुवनेऽतिरम्यनगरं वन्दे सहर्षं व्रजम्।। ६।।

श्रीमद्भागवतस्य मूलभवनं श्रीकृष्णजन्मस्थलं,
नानारत्नसमन्वितं ह्यघहरं श्रीभानुजावेष्ठितम्।
दिव्यं धाम सुखावहं रसमयं माधुर्यसारं व्रजम्।
श्रीवृन्दादिसखीयुतं सुखरैरासेव्यमानं भजे।। ७।।

वन्द्या सदा या मथुरा धरायां रत्नं यथा स्यात्सुखदं नराणाम्।
यत्रागताः स्वर्गत एव साक्षात् देवाः स्वयं वासमुशन्ति यत्नात्।। ८।।

यासीत्पुरा सिद्धगणैः सुवन्द्या यत्रावसन् विप्रवराः सुखेन।
सतां शिरोभूषणमध्यगण्या राराजते पुण्यकिरीटतुल्या।। ९।।

विराजते यत्र सदैव माधवः तथा रमन्तेऽत्र सुखेन साधवः।
आयाति कैलासगतोऽप्युमाधवः रेमेऽत्र कुञ्जेषु च राधिकाधवः।। १०।।

यत्र प्रजारञ्जनसज्जनो नृपः श्रीशूरसेनोऽतिबलिष्ठरक्षकः।
धनेन धान्येन सुखेन पालयन् जनाननानन्दशशीव शोभितः।। ११।।

महापुरी सा मथुरा विराजते ख्यातः पुरा या खलु शौरमण्डली।
कंसोऽपि दुष्टो हत ईश्वरेण यः तत्रैव लेभे परमां गतिं शुभाम्।। १२।।

सर्वेऽपि तुष्टा मनुजा प्रजाः स्थिताः गावश्च वृक्षाश्च खगाश्च मानवाः।
श्रीगोकुलं ये च मृगाः समाश्रिताः नेच्छन्ति नाकं मुनयोऽपि तापसाः।। १३।।

धन्या हि पूर्णा मथुरा पुरा स्मृता रत्नैश्च धान्यैश्च बुधैश्च सज्जनैः।
अवातरद्यत्र विभू रमापतिः स्वयं प्रभुर्भुक्तिविमुक्तिदायकः।। १४।।

रामोऽपि विष्णोरवातार एव सः श्रीरोहिणीगर्भगुहामृगाधिपः।
संकर्षणो नन्दकुले महाबली लेभे जनिं स्वामिह लाङ्गली हली।। १५।।

श्रीभानुजा यत्र सदा हरिप्रिया प्रक्षालनार्थं श्रयते हरेः प्रदम्।
प्राप्तुं प्रभुं जीवजनेषु निर्जराः स्वर्गं विहायात्र जनिं नु लेभिरे।। १६।।

धन्यं व्रजं व्रजकुलं व्रजवंशनाथं राधान्तथा पशुकुलं व्रजगोपिकाश्च।
नन्दं बलं खगगणं सुखदां यशोदां तां देवकीं सुरनुतां मथुरां भजेऽहम्।। १७।।

सूर्यात्मजा सुखकरी हरतीह पापं सौख्यञ्च यत्र तनुते वृषभानुपुत्री।
सा राधिका प्रभुवरस्य च योगमाया वृन्दावनं हि सुखदं भुवि नाककल्पम्।। १८।।

श्रीकृष्णदेवजननी वसुदेव इत्थं नन्दश्च रामसहितः सुखदश्च कृष्णः।
राधा च गोपवनिता मृगपक्षिणश्च धन्याश्च ते सुरनराः निवसन्ति येऽत्र।। १९।।

वन्दे सदा मधुपुरीं मथुरां सुधन्यां, कृष्णः सुखेन भगवान् भुवि योऽत्र रेमे।
गोपाङ्गनाभिरभितः परितो व्रजञ्च श्री गोकुलञ्च सुखदं शरणं समेषाम्।। २०।।

वृन्दावनं सुखकरं सततं नराणां, श्रीगोकुलं व्रजकुलं वरदं समेषाम्।
धन्यां पुरीं मधुपुरीं मथुरां पवित्रां वन्दे सुरैरभिनुतां भुवि मुक्तिदात्रीम्।। २१।।

## ३. मायापुरी (हरिद्वारम्)

प्रसिद्धा श्रीगङ्गा वहति सुजला सुन्दरनदी
तटे रम्यं यस्याः लसति नगरं पुण्यवलितम्।
अहो धन्यं क्षेत्रं सुरनुतहरेर्द्वारमिव यत्
हरिद्वारं ख्यातं हरति सकलं शोकनिचयम्।। १ ।।

जनाः कृत्वा पापं द्विजवधसमञ्चापि विविधं
मदान्धाः दुष्टा वा सततमपकारेषु निरताः।
ध्रुवं सन्ताड्यन्ते यमपुरभटैः क्रूरमतिभि–
रिति श्रुत्वा प्राप्ता अघहरहरिद्वारमचिरम्।। २ ।।

मखारम्भे दक्षान्निजजनकतो या भगवती
सती पत्नी शम्भोः स्वपतिविषये वाक्यमशुभम्।
निशम्यैवं हा सा सपदि मखवह्नौ नु पतिता
सतीक्षेत्रं पुण्यं तदिह भुवने मुक्तिजनकम्।। ३ ।।

रमन्ते रुद्राद्याः विविधसुरसंघाः क्षितितले
हरिद्वारे पुण्ये विबुधमुनिवृन्दाश्च सुलभाः।
जनाः श्रुत्वा दूरात् स्वजनपतिपुत्रान् प्रियतमान्
परित्यज्य प्राप्ता अघहरपुरं शान्तिजनकम्।। ४ ।।

पुरीयं मायाख्या पतितजनकल्याणसदनं
सदा त्रातुं पापात्प्रभवति जनान् कष्टवलितान्।
ऋषीकेशश्चासौ, लसति निकटे यत्र सुखदः
तदाप्तुं मे चेतो भवति सततं ह्यातुरतमम्।। ६ ।।

यदाऽऽयातः कश्चिद् यमपुरभटो धर्तुमघिनम्।
तदा विष्णोर्दूतो वदति सहसागत्य तरसा।

अरे रे! दुष्ट! त्वं व्रज मम जनोऽयं खलु यतः
हरिद्वारक्षेत्रे मरणसमये राजत इह।। ६।।

यज्ञं यत्र कृतं पुरा भगवता श्रीब्रह्मणा विश्रुतं,
कुण्डं चापि समस्तपापहरणं श्रीब्रह्मकुण्डाभिधम्।
यत्रास्ते पदचिन्हयुक्तसदनं श्रीविष्णुदेवस्य च
वन्दे तद्भुवि कीर्तनीयनगरं द्वारं हरेर्मुक्तिदम्।। ७।।

मायापुरी हरद्विारं गङ्गाद्वारं तथैव च।
तत्रापि कनखलक्षेत्रं ज्वालापुरसमन्वितम्।। ८।।

हरिद्वार! नमस्तुभ्यं भुक्तिमुक्तिप्रदाय ते।
कायेन मनसा वाचा त्वामेवेच्छाम्यहं सदा।। ९।।

## ४. काशी—विंशतिका

धन्या काशी लसति भुवने धामरत्नं नराणां,
तन्त्राणां या भवति नगरी विश्वमध्ये विचित्रा।
नानाप्रान्तात्सपदि विदुषां यत्र वासः सुखेन
काशीं वन्दे सुरवरपुरीं ज्ञानराशेश्च केन्द्रम्।। १।।

कैलाशं सुखदं विहाय भुवने श्री विश्वनाथः प्रभुः
गङ्गातीरमुपागतोऽस्ति गिरिशः धन्यांश्च वाराणसीम्।
सर्वज्ञश्च महेश्वरः पशुपतिः कर्त्ता स विश्वेश्वरः
यत्रागत्य महीतले निवसति त्रातुं जनान् सर्वदा।। २।।

शम्भोर्नाम जपन्नरोऽत्र कुरुते देहस्य त्यागं यदि,
काशीवासवशात्सदैव लभते मुक्तिं ध्रुवं शाश्वतीम्।
श्रीशम्भुर्जगतां पतिः प्रतिदिनं संरक्षको यः सतां,
दिव्यन्तं करुणानिधानसहितं काशीपुरं संभजे।। ३।।

गङ्गा यत्र विराजते कलिहरा मुक्तिप्रदा सर्वदा
कालुष्यं हरतीह पापशमनी श्रीजाह्नवी स्वर्गदा।
स्नात्वा देवगणाः भजन्ति गिरिशं मृत्युञ्जयं शङ्करं
तां काशीं प्रणमामि शोकदमनीं स्वर्गापवर्गप्रदाम्।। ४।।

दिव्यानन्दकरी सदात्र नगजा दीनार्त्तसन्तारिणी
सौख्यस्यायतनं निधिश्च जगतां विद्यादिसत्सम्पदाम्।
भक्तानां हितकारिणी भुवि महामोहापहा सत्प्रभा
पायान्नो जगदीश्वरी शिवकरी मातान्नपूर्णेश्वरी।। ५।।

वाराणसी शिवपुरी जगतां सताञ्च
वन्द्या सुरासुरगणैः महिता च लोके।
ख्याता स्तुता मुनिवरैः सकलादिसिद्धै
नूनं सदा विजयते जगतीतलेऽस्मिन्।। ६।।

धन्या महेशवलिता सुखदा च काशी
देवा वसन्ति सुरलोकसुखं विहाय।
लब्धुं सुशान्तिमचिरं सुलभं सदात्र
श्रीजाह्नवी त्रिपथगा वहतीह यस्मात्।। ७।।

साक्षी विनायकवरो भवतीह साक्षी
संकष्टमोचनविभुर्हरतीह कष्टम्।
चण्डी सदा भगवती वसतीह कुण्डे
विश्वेश्वरः प्रभुवरस्त्विह विश्वनाथः।। ८।।

दीनोऽपि मातृकृपया लभते त्विहान्नं
हीनोऽपि शम्भुकृपया लभते च मुक्तिम्।
आर्त्तोऽपि प्राप्य शरणं लभते च सौख्यं
धन्यं सदा शिवपुरं जगतीतलेऽस्मिन्।। ९।।

अत्रैव संस्कृतगिरां प्रथितं सुकेन्द्रं
देशस्य पण्डितबुधाश्च समाश्रिता: यद्।
वैदेशिकाश्च सुधियोऽत्र समेत्य शास्त्रं
प्राचीनरीतिमवलम्ब्य पठन्ति केचित्।। १० ।।

गैर्वाण्या: विबुधा: वसन्ति विविधा: पारङ्गता: कोविदा:
यत्रास्ते सुरभारतीकृतधियां श्रीविश्वविद्यालय:।
नानादेशसमागता बुधवरा: सत्संस्कृते: पण्डिता:
काश्यामेव परां गतिं निदधति प्रायो विदग्धा: जना:।। ११ ।।

पापान्वितोऽतिनिघृणस्त्यजतीह देहं
श्रीविश्वनाथकृपया लभते स मोक्षम्।
श्रीजाह्नवी सपदि तारयतीह सर्वान्
ये केऽपि शम्भुशरणे यदि मृत्युमाप्ता:।। १२ ।।

हरिश्चन्द्रो भूप: कृतयुगनरेशो भुवि वर:
सदा सत्ये निष्ठो भुवनविदितो धर्मकुशल:।
स्वदेहं विक्रेतुं वचननिरतो दारतनयौ
समादातुं दानं ह्यलभत पवित्रं शिवपुरम्।। १३ ।।

हिन्दूधर्मविचारको नरवर: श्रीमालवीयो बुध:
दानं चाप्य सरस्वतीसुतवर: श्रीविश्वविद्यालयम्।
चक्रे यत्र महामना सुमदन: काश्यां पवित्रस्थले
नूनं सैव पुरी सदा विजयते कीर्त्या च धर्मेण च।। १४ ।।

केचिद्भागवता वसन्ति सुधियश्चान्ये च शाक्ता: पुन:
शैवाश्चापि तथागताश्च विविधे मार्गेऽनुरक्ता जना:।
यत्रागत्य निरन्तरं भगवत: सच्चिन्तनं कुर्वते
वन्दे तं शिवदं शिवं शिवकरं श्री विश्वनाथालयम्।। १५ ।।

सम्प्राप्यापि लबङ्गिकां मधुमतीं श्रीजाह्नवीभक्तितः
शास्त्रज्ञो मतिमान् बुधः समभवत् श्रीमान् जगन्नाथकः।
यत्रागत्य पुनर्बभूव निपुणो गङ्गाधरे भक्तिमान्
पुण्यात्मा परमेश्वरस्य कृपया मुक्तः सतां वन्दितः।।१६।।

आयातौ रघुवंशभालतिलकौ श्रीराघवो लक्ष्मणः
भक्तानामनुरञ्जकौ च तुलसीदासादिदिव्यात्मनाम्।
गङ्गातीरमुपागतौ रघुवरौ पुण्यात्मनां रक्षकौ
सा काशी सुखदा सदैव जगतां नाथो यदास्ते स्वयम्।।१७।।

विहाय सर्वं मतिमान् नरः सः
संसेवते मुक्तिकरीं पुरीं यः।
श्रीविश्वनाथाल्लंभते सुखञ्च
शान्तिं परां स्वर्गसुखं सुमुक्तिम्।।१८।।

श्रीविश्वनाथकृपया सततं नराणां
श्रीजाह्नवीसुकृपया सततं नराणाम्।
श्रीशैलजा–भगवती–कृपया मुनीनां
नूनं सदैव सुलभो भवतीह मोक्षः।।१९

श्री विश्वनाथशरणं मम चास्तु सर्वं
श्रीजाह्नवीजलकृपा मयि चान्तकाले।
साक्षी विनायक इहास्तु सदा सहायः
संकष्टमोचनविभुर्मम कष्टहर्त्ता।। २०।।

धन्या काशी विमलनगरी सद्गुणानां निधिर्या,
नाना देवाः सपदि तरसा यत्र सम्प्राप्य तुष्टाः।
गङ्गा पुण्या हरति सततं कष्टराशिं जनानां
वन्द्या धन्या भुवि शिवपुरी नाम वाराणसी सा।। २१।।

## ५. काञ्चीपुरम्

विराजते दक्षिणभारतेऽस्मिन्
श्रीमद्रपुर्यां प्रथितं पवित्रम्।
भुक्तिप्रदं मुक्तिकरञ्च दिव्यं
काञ्चीपुरं क्षेत्रमतीव पुण्यम्।। १ ।।

काञ्चीपुरी हरिहरात्मकक्षामरूपा
शर्वस्य माधवयुतस्य च तीर्थरत्नम्।
शक्तेश्च भुमिपटलेऽत्र यतो विलग्नं
पीठं पवित्रधवलं भुवि लोकवन्द्यम्।। २ ।।

कामाक्षीं सततं प्रयान्ति शतशः शाक्ताश्च दूरात्सदा
शैवा यान्ति सहस्रशोऽपि सुखदां काञ्चीपुरीं मुक्तये।
विष्णोर्धाम मतं यतोऽस्ति भुवने श्रीवैष्णवा नित्यश–
श्चान्ये भक्तवराः प्रयान्ति नगरं पुण्यं परं पावनम्।। ३ ।।

श्रीमच्छङ्करपादपद्मलसितं पीठन्तु सन्दृश्यते
नानाशास्त्रविचारकाश्च विबुधा गच्छन्ति काञ्चीपुरम्।
एकाम्रेश्वरलिङ्गमस्ति भुवने भूतत्त्वलिङ्गं शुभं
शाक्तास्तत्र सुधार्मिकाश्च सुलभाः शैवास्तथा वैष्णवाः।। ४ ।।

स्नानार्थं भुवि सर्वतीर्थमिह यत् पुण्यं पवित्रं स्मृतं
श्राद्धं मुण्डनमत्र कर्त्तुमुचितं प्रोक्तन्तु शास्त्रे वचः।
धन्यं क्षेत्रमिदं पुराणगदितं काञ्चीपुरं मुक्तिदं
नानादेवयुतं सुकीर्तिजनकं शान्तिप्रदं सर्वदा।। ५ ।।

कामाक्षी शक्तिरूपा विविधबुधनुता सुन्दरी विश्ववन्द्या
नानाविद्याप्रदात्री निखिलशुभकरी कामकोटि प्रसिद्धा।
यत्रास्ते सन्निधाने हरिहरसदनं सौख्यदं कामदञ्च,
वन्दे तां दिव्यरूपां भवभयशमनीं कामदां कामकोटिम्।। ६।।

आद्या लक्ष्मी: सदा पायाद् विद्यालक्ष्मीश्च बुद्धिदा
धनलक्ष्मी: धनं दद्याद् धान्यलक्ष्मी: सदा सुखम्।। ७।।

दद्यात् सन्तानलक्ष्मी: या पुत्रपौत्रादिसन्ततिम्
शुभं सौभाग्यलक्ष्मीश्च वीर्यलक्ष्मी:बलन्तथा।। ८।।

विजयं विजयालक्ष्मी: सर्वा पान्तु पुन: पुन:।
अष्टलक्ष्मीप्रसादेन सर्वाभीष्टफलं भवेत्।। ९।।

सौख्यदो वरदश्चास्ते वामनो विष्णुरेव हि।
'त्रिविक्रम' इति ख्यात: विशालो मूर्तिमान् विभु:।। १०।।

भव्यमूर्त्तियुतं दिव्यं सुब्रह्मण्यस्य मन्दिरम्।
अत्रैव विद्यते साक्षात् कार्तिकेयो बली प्रभु:।। ११।।

क्षेत्रं पूतञ्च पापघ्नं ध्रुवं काञ्चीपुरं मतम्
यत्र सम्प्राप्य लोकास्तु सुखिन: स्यु: स्वयं सदा।। १२।।

शिवं नत्वा काञ्च्यां भवति सुलभं सौख्यमखिलम्
हरिं नत्वा नूनं भवति मनुजो रक्षिततनु:।
सुपूज्या कामाक्षी विविधसुखयोगं प्रकुरुते
ध्रुवं क्षेत्रं पुण्यं हरि—हर शिवा: यत्र सुलभा:।। १३।।

## ६. अवन्तिका

मध्यप्रदेशे विलसत्यवन्तिका
धन्या सुरम्या सुखदा मनोरमा।
या मुक्तिदात्री भुवनेषु वन्दिता
क्षिप्रातटे मङ्गलधाम राजते।। १ ।।

निधिर्गुणानां भवनं सुरार्चितं
विराजमानं सदनं पिनाकिनः।
धन्यं महाकालशिवस्य मन्दिर–
मिहैव लोके लसतीति मुक्तिदम्।। २ ।।

प्राचीनकाले नृपविक्रमो भुवि
शशास राज्यं भुवने सुकीर्तितः।
ख्याता सभा या नवरत्नमण्डिता
धन्येह मान्या त्वमरावती स्मृता।। ३ ।।

आसीद्विप्रवरः पुरा शिवरतो धर्मार्थकार्ये बुधः
यत्रागत्य जनेषु कष्टजनको दुर्दूषणो दानवः।
दृष्ट्वा त्रस्तजनं तदा द्विजवरः चक्रे तपः शूलिनः
सन्तुष्टो धरणीतलात्पशुपतिः शीघ्रं जघानासुरम्।। ४ ।।

शर्वः सर्वमयो विभुर्दनुजहा लोकान् सदा रक्षितुं
तीर्थे तत्र मुदा वसन् प्रभुवरः श्रीशङ्करो राजते।
योऽवन्त्यां परिरक्षितुं निजजनान् भक्तान् समस्तान् हरः
ज्योतिर्लिङ्गमिदं सदा पशुपतेः स्तुत्यं महाकालकम्।। ५ ।।

मान्या सतां शुभकरी हरसिद्धिदेवी
दुर्गा शिवा भगवती भुवि योज्जयिन्याम्।
सा विक्रमादिनृपपूजितशक्तिराद्या
पायाज्जनान् हरनुता भुवि चण्डहन्त्री।। ६।।

'विशाला' विख्याता भुवि कनकशृङ्गा सुखकरी,
''अवन्ती'' नाम्ना या प्रथितयशसा लोकविदिता।
'कुशस्थल्यां: पुर्यां सपदि लभते सौख्यसदनं
महाकालो देवो हरति कलुषं यत्र सततम्।। ७।।

'पद्मावती' सुविदिता 'त्वमरावती' च
क्षिप्रानदीतटविराजितराजधानी।
रक्षाकरी सुनगरी सुखदा ह्यवन्ती
विद्यावतां धनवताञ्च पुरी सदैव।। ८।।

नानापण्डितमण्डितो बुधवरः श्रीविक्रमादित्यराट्
योऽवन्त्यां परिपालको नृपवरः सद्धर्मसंस्थापकः।
यस्यासीन्नवरत्नभूषितसभा श्रीकालिदासाादिभिः
शूरः सत्यपराक्रमो भुवि नृपश्चाद्यापि जेगीयते।। ९।।

यत्रासन् विबुधाः वराहमिहिरः शंकुश्च धन्वन्तरिः
ख्याता ये घटकर्परः क्षपणकः श्रीकालिदासस्तथा
अन्ये चामरसिंहकोशविबुधा वैतालभट्टः पुनः
धन्यासीन्नवरत्नभूषितसभा पुर्यामवन्त्यां क्षितौ।। १०।।

धन्यं पुण्यमयं क्षेत्रं भुक्तिमुक्तिप्रदं क्षितौ।
उज्जयिनीति विख्यातं विशालानाम विश्रुतम्।। ११।।

## ७. श्रीद्वारकाधीश–स्तुतिः

विलसति भुवि तीर्थे गुर्जरप्रान्तरत्ने

त्रिभुवनपतिविष्णुर्दीनबन्धुर्दयालुः।

जलनिधितटवासः श्रीनिवासो रमेशो

हरतु कलुषपुञ्जं गोमतीद्वारकेशः।।१।।

धनजनसुखदाता कृष्णदेवो मुरारिः

धनरहितसुदाम्नः साधुमित्रस्य बन्धुः।

निवसति 'रणछोड़ो' द्वारकाधीशदेवः

पतितमपि जनानां पामराणां शरण्यः।। २।।

रजतरचितपीठे राजते दिव्यमूर्तिः

कनकमयविशाले मन्दिरे वासुदेवः।

विविधमणियुतेऽस्मिन् माधवो गोपपूज्यो

भवतु सकलनाथो भूरिशः क्षेमकर्त्ता।। ३।।

हरिः साक्षात्प्राप्तस्त्रिभुवनपतिर्गोकुलपुरात्

तटे गोमत्या यः प्रथितरणछोड़ो विजयते।

सदा लोकान् पायाद्विविधभवबाधातुरजनान्

स दीनानां नाथः सततमवतान्मां करुणया।। ४।।

त्रिविक्रमोऽस्य पार्श्वेस्ति प्रद्युम्नोऽपिच सन्निधौ।

कुशेश्वरो महादेवो धाम्नि यत्र विराजते।। ५।।

द्वीपे सुरम्ये पृथगस्ति मन्दिरं

नाम्ना प्रसिद्धं खलु ''भेंटद्वारका''।

नौकासहायेन च पोतयानतः

सम्प्राप्य देवं सुखिनश्च मानवाः।।

वितरतु सुखमोदं रुक्मिणीनाथदेवः
सुखमयपरिवारं नः प्रकुर्यान्मुरारिः।
सततमिह सुपूज्यः सत्यभामासमेतः
हरतु सकलबाधाः द्वारकाधीशकृष्णः।। ७।।

सुरवरमुनिपूज्यो द्वारकेशः कृपालुः
त्रिभुवनसुखदाता योऽस्ति डाकोरनाथः।
सघनविपिनमध्ये यस्य वासः प्रशस्तः
स भवतु भुविनाथः सर्वदा मे सहायः।। ८।।

देवाय दानवशमाय सुरप्रियाय
दामोदराय हरये च रमाधवाय।
श्रीशाय गोपसुखदाय सुरार्चिताय
कृष्णाय कंसदलनाय नमो नमस्ते।। ९।।

द्वारकेशाय कृष्णाय देवाय परमात्मने
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।। १०।।

पुरीः नत्वा सर्वाः सततसुखदाः पावनकरीः
विवेकग्रन्थेऽस्मिन् जनिमृतिजरातापशमनम्।
पुरीणां सप्तानां जगति जनतानन्दजनकं,
मुमानाथेनेदं व्यरचि रुचिरं पुण्यशतकम्।।

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य–विद्यावाचस्पति डा उमारमणझाशर्मविरचितायां विवेकसहस्र्यां सप्तपुरीशतकं सम्पूर्णम्।

# विवेक–साहस्री

## ७. चतुर्धाम–विविधतीर्थशतकम्

१. श्रीजगन्नाथ–स्तुतिः
२. श्रीबदरीश–स्तुतिः
३. श्रीरामेश्वर–स्तुतिः
४. श्रीद्वारकाधीश–स्तुतिः
५. कुरुक्षेत्रम्
६. विभिन्नतीर्थ–स्तुतिः
७. प्रयागराज–स्तुतिः
८. मिथिला–स्तुतिः

गङ्गा यत्र सरस्वती च यमुना तिस्रो मिथस्संगताः
प्रख्यातो भुवि तीर्थराज इति यो मोक्षप्रदो मन्यते।
देवा यत्र वसन्ति संगमतटे त्यक्त्वा च नाकं सदा
वन्दे तत्सुरबृन्दवन्दितपुरं भक्त्या प्रयागस्थलम्।।

## १. श्रीजगन्नाथ—स्तुतिः

जगन्नाथो नाथो विलसति विभुस्सागरतटे
प्रसिद्धे नीलाद्रौ हरिरिह सुभद्राबलयुतः।
सदाऽपायात्पायाद्बहुविधभयान्नः करुणया
दयायुक्तो देवः सकरुणकटाक्षैर्निजजनान्॥१॥

जगन्नाथः स्वामी पतितजनसन्तापहरणः
सुभद्रा भद्रार्थं भवति बलरामोऽपि बलदः।
प्रसन्नोऽयं पुर्यां हरति जनपीडा बहुविधा—
स्तटे सिन्धोः साक्षाद्भवभयहरोऽयं मुरहरः॥२॥

पुरा क्षेत्रे पुर्यां हरिरिह तु नीलाचलगिरौ
सुनीलो मूर्त्तिस्थो मुररिपुरयं माधव इति।
चकारेन्द्रद्युम्नो दशशतहयाख्यान् शुभमखान्
सुतीर्थे चक्राख्ये रुचिरमपि चक्रे हरिगृहम्॥३॥

स्वयं देवः साक्षान्निवसति सदा दारुशकले
ध्रुवं लोकानार्तानवति भुवने क्लेशपतितान्।
बलो भद्रा कृष्णः भुवि विदधते मुक्तिमचिरं
भृशं ते कल्याणं त्रिदिवसुखशान्तिं विदधति॥४॥

न कश्चिच्छ्रेष्ठो वा भवति भुवि निम्नोऽत्र सुजनः
न वा स्पर्शे दोषः कथमपि भवेद्धाम्नि परमे।
समाना श्रेष्ठास्ते हरिचरणसेवाफलवशात्
भवन्त्येवं सर्वे सपदि हरिलीना इह जनाः॥५॥

प्रसादान्नं भुक्त्वा हरिपदरता भक्तिभरिताः
लभन्ते मुक्तिं ते कलिमलविमुक्ता नरवराः।

गदाचक्रोपेता हरिसदनवासाः सुमतयो
जनिं नैवं जातु प्रभुपदगता यान्ति भुवने।। ६।।
जगन्नाथः साक्षादवतु पतितान् मादृशजनान्
समृद्ध्या पुष्णीयुर्हरि–बल–सुभद्राः जगदिदम्।
न जानेऽहं सेवाविधिमपि विभो त्वच्चरणयोः
परं याचे विष्णो! हर सकलबाधा यदुपते!।। ७।।

वितरतु बहुमोदं दारुरूपो मुरारिः
दिशतु निखिलभद्रं सर्वभद्रा सुभद्रा।
बलमिह बलभद्रो लाङ्गली मां प्रदत्तां
धनसुखपरिपूर्त्तिं नस्त्रयस्ते दिशन्तु।। ८।।

दामोदराय धनदाय सुखप्रदाय
भद्रान्विताय बलदेवयुताय तुभ्यम्।
नीलाचले जलनिधेस्तटसंस्थिताय
नाथाय ते भगवतेऽस्तु नमो नमो नः।। ९।।

# जगन्नाथस्तुतिः

गोविन्दं पुरुषोत्तमं यदुवरं लीलाकरं श्रीवरं
नीलाम्भोजरुचिं प्रसन्नवदनं देवाधिदेवं विभुम्।
नीलाम्बोधितटस्थरत्नभवने संशोभितं माधवं
वन्दे तं करुणाकरं सुरुचिरं देवैः सदा वन्दितम्।। १।।

राधेशं वरदायकं प्रभुवरं देवं जगन्नाथकं
श्रीकृष्णं बलदेवसङ्गलसितं मध्ये सुभद्रान्वितम्।
श्रीशन्तं जगतां पतिं गिरिधरं वृन्दावनेशं कलौ
वन्देऽहं जगदीशमीड्यमनिशं नीलाचलस्थं प्रभुम्।। २।।

पायान्नः पुरुषोत्तमो मधुरिपुर्लीलावतारो हरिः
ब्रह्माद्यैः सुरसेवितोऽथ जगतां नाथो हरिर्दीप्यते।
स्वेच्छास्वीकृतविग्रहो बुधवरो नीलाश्मरत्नद्युतिः
सानन्दं जगदीश्वरो बलयुतः श्रीमान् सुभद्रान्वितः।। ३।।

त्यक्त्वायोध्यां स रामः सुगहनविपिनं जानकीं प्रेष्य वन्द्यो
किम्वा राधां स्वकान्तां विरहकृशतनुर्ध्यानयोगी स कृष्णः।
त्रेतायां द्वापरे वा दनुजकुलहरो राघवो माधवो वा
नीलाद्रौ खिन्नचित्तः पुनरिह किमसौ दारुरूपो मुरारिः।। ४।।

त्यक्त्वा लीलां रमेशो मधुररसयुतां राधिकावल्लभः किं
स्मृत्वा राधाञ्च गोपीः मधुरमुरलिकां चाथ कुञ्जं निकुञ्जम्।
सम्प्राप्तः सिन्धुतीरं पुनरिह स कलौ दीनबन्धुर्दयालुः
नीलाद्रौ योगिरूपो जलधररुचिरो दारुरूपो मुरारिः।। ५।।

पूर्णानन्दं परमसुखदं श्रीजगन्नाथमीड्यं
दीनार्त्तानां सुखदशरणं सच्चिदानन्दरूपम्।
देवं नीलाचलपतिमहं विश्ववन्द्यं रमेशं
वन्दे धन्यं भुवनविदितं विश्वबन्धुं हरिं तम्।। ६।।

नीलाश्मद्युतिमिन्दुकान्तिवदनं लोकाभिरामं प्रभुं
मध्ये मङ्गलरत्नवेदिलसितं रम्योन्नते मन्दिरे।
वन्दे श्री बलयुक्तदिव्यपुरुषं मध्ये सुभद्रान्वितं
श्रीकृष्णं जगदीश्वरं यदुपतिं भक्तप्रियं माधवम्।। ७।।

श्रीमन्! नाथ! नमोऽस्तु ते भगवते विश्वैकपूर्णात्मने!
जाने नैव तवार्चनं न च विधिं श्रद्धाविहीनो यतः।
ज्ञात्वा पापमतिं सुकर्मरहितं भक्त्या विरक्तं च मां
दीनं पाहि विभो! न मेऽस्ति शरणं चान्तेऽधुना त्वां विना।। ८।।

नीलाद्रौ त्वां भजन्ते सुरनरमुनयो योगिनो ध्यानचित्ताः
पूर्णानन्दं रमेशं जलधितटगृहे भद्रया संवसन्तम्।
गोविन्दं दीनबन्धुं जगति धृततनुं दारुरूपं मुकुन्दं
वन्दे विश्वैकवन्द्यं निखिलभयहरं श्रीजगन्नाथदेवम्।। ९।।

जगन्नाथ! नमस्तुभ्यं सच्चिदानन्दमूर्त्तये।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।। १०।।

## २. श्रीबदरीश–स्तुतिः

कृपार्द्रो हेमाद्रौ वसति बदरीशो भुवि महः
सदा ज्योतिःपीठे प्रभुरलकनन्दाशुचितटे।
तपस्तप्त्वा घोरं मुनिजनहितार्थं सुविदितः
स्वयं साक्षाद्विष्णुः प्रभवति परित्रातुमखिलम्।। १।।

युगे सत्ये पुण्यौ तपसि ''नरनारायणयती''
भजन्तस्त्वां भक्त्या दशरथसुतो राघवनृपः।
ऋषिर्वेदव्यासः परमविकलो द्वापरयुगे
कलौ शान्तिं प्राप्ता प्रथितयतयः शङ्करसमाः।। २।।

प्राचीनं बदरीशतीर्थममलं स्वर्गप्रदं भारते
औदीच्ये बदरीवनान्तरगता व्यासस्य पुण्या कुटी।
विष्ण्वंशस्य नरस्य पुण्यकृतिनो नारायणाख्यस्य चा–
प्यासीद्यत्र तपोवनं भगवतो धर्मस्य सून्वोर्द्वयोः।। ३।।

सौन्दर्यस्य निधानकं स ससृजे नारायणः सर्वगः
स्वर्लोकस्य विभूषणं सुरपतेः राज्येऽपि यद्दुर्लभम्।
विद्युत्कान्तिसमन्वितं मुनिजनस्यार्थे मनोमोहनं
स्त्रीरत्नं सुसमाधिभङ्गकरणं ध्यात्वोर्वशीनामकम्।। ४।।

नरनारायणौ यत्र पर्वतौ धर्मसाक्षिणौ।
नमस्यो बदरीनाथो राजते तत्र सिद्धिदः।। ५।।

तप्तकुण्डं कूर्मधारां धारां प्रह्लादसंज्ञिकाम्।
ऋषिगङ्गां महातीर्थं नारदं कुण्डमाश्रये।। ६।।

अस्त्युत्तरस्यां बदरीशविष्णोर्मुक्तिप्रदं ब्रह्मकपालतीर्थम्।
श्राद्धं नु कार्यं हि दिवङ्गतानां पिण्डप्रदानेन च पूर्वजानाम्।। ७।।

स्वयं साक्षाद्विष्णुर्हिमकलशसंशोभितगृहे
द्वयोर्गिर्योर्मध्ये प्रभुरलकनन्दाशुचितटे।
सुपद्मासीनोऽसौ भवतु बदरीशो भवहरः
शिलाशालग्रामो विभुरवतु दीनान् करुणया।। ८।।

भगवन्! बदरीनाथ! लोककल्याणकारक!
समर्प्यते स्तुतिर्भक्त्या मया विप्रेण सादरम्।। ९।।

## ३. श्रीरामेश्वरस्तुतिः

समुद्रस्थे द्वीपे विलसति हरोऽयं त्वघहरः
प्रसिद्धे संशुद्धे ननु जगति रामेश्वर इति।
सुपूज्यो रामस्य त्रिदशगणवन्द्यश्च सुजनैः
समाराध्यो गङ्गाहिमगिरिसुताभाग्यनिलयः।। १।।

ज्योतिर्लिङ्गमिदं प्रसस्तमतुलं शंभोश्च मान्यं भुवि
यत्संस्थाप्य च सीतया रघुकुलोत्तंसेन चाकाङ्क्षितम्।
रम्ये गन्धकमादने स भगवान् रामेण संपूजितः
द्वीपे दक्षिणभारते सुललिते रामेश्वरो राजते।। २।।

सीताया रघुनाथदेववचसा ह्यग्नौ परीक्षा गता,
युद्धे विप्रवधादगस्त्यवचसा रामस्य चात्रैव यत्।
प्रायश्चित्तमभूदतोऽस्ति भुवने क्षेत्रं परं पावनं
यत्राभाति समस्तपापशमनं युग्मं सदा लिङ्गयोः।। ३।।

कैलासाद्धनुमाञ्छिवस्य तरसा लिङ्गं स नेतुं ययौ
काले नैव समागतः स तु यदा, संस्थापितं सैकतम्।
सीतानिर्मितलिङ्गमत्र तदनु प्राप्तं द्वितीयं कपेः
चक्रेऽर्चां स विभुः शिवस्य सविधे तच्चापि संस्थापयन्।। ४।।

सेतुमाधवदेवस्य वैष्णवानां सुमन्दिरम्।
तत्तीर्थसन्निधौ पुण्यं वर्तते पापनाशनम्।। ५।।
उत्तरे दक्षिणे भागे पूर्वस्मिन् चापि सुन्दरम्
भव्यं विशालं दीर्घञ्च राजते गोपुरत्रयम्।। ६।।

तीर्थं सर्वं ''शिवञ्चैव ''कोटितीर्थं'' तथाऽमृतम्''।
तीर्थं माधवचक्रञ्च वर्तते मोक्षदायकम्।। ७।।

रामेश्वराय सुखदाय महेश्वराय
रामप्रियाय भवसंकटमोचनाय।
रुद्राय देवनुतरामसमर्चिताय,
तस्मै नमः सकललोकशुभप्रदाय।। ८।।

रामेश्वरं रामसुपूजितञ्च
समर्च्य गौरीप्रियमष्टमूर्त्तिम्।
विद्यां सुशान्तिं सुबलं महेशात्
धनञ्च पुत्रान् लभते हि भक्तः।। ९।।

रामेश्वराय नाथाय लोकनाथाय शम्भवे
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।। १०।।

## ४. द्वारकापुरी

या द्वारकेति शुभसुन्दरनामधेया
पूज्या सदैव भुवि सप्तपुरीषु धन्या।
राष्ट्रे सुपुण्यनगरी जयिनी मनोज्ञा
मध्येऽम्बुधेः परमरम्यविभां दधाना।। १।।

नेत्राभिरामसुषमां दधतीति रम्या
गम्या सुरेन्द्रमुनिवृन्दगणैः स्वकीर्त्या।
संशोभते विविधकान्तिगुणानवद्या
कृष्णस्य धामवलिता भुवि कीर्त्तनीया।। २।।

विज्ञानमन्दिरवती सुकलाभिरामा
सा द्वारिका सुदृढदुर्गवती समृद्धा।
लोकाभिरामनगरी शरणं समेषां
श्रीकृष्णभव्यसदनं सुखदं च यत्र।। ३।।

यस्याः सदैव कुरुते निजवीचितोयैः
प्रक्षालनं चरणयोर्जलधिः सहर्षम्।
संस्तुत्य गायति रवैर्महिमानमस्याः
धन्या सदा विजयते भुवि पूरियं सा।। ४।।

पुण्या पुरी जगति या न निजोपमानं
धत्ते स्म लोकहितपुञ्जकृते धरायाम्।
अट्टालिकाश्च भवनानि महोज्ज्वलानि
शृङ्गैः पुरी च गगनं स्पृशति स्म हैमैः।। ५।।

स्वर्गात् सुरा ह्युपगतास्सहसा पुरीन्तां
द्रष्टुं पवित्रसदनं भवनं मुरारेः।
रत्नाकरः प्रतिपलं कुरुते च यत्र
सेवां हरेः भगवतः पुरुषोत्तमस्य।। ६।।

## ५. कुरुक्षेत्रम्

प्रियेऽस्मिन् देशे नो लसति हरियाणाख्यविषये
कुरुक्षेत्रं तीर्थं सकलकलुषत्राणकरणम्।
सरस्वत्यास्तीरे कति यतिवरा ध्याननिरताः
परं लब्ध्वा मोक्षं सपदि चिरशान्तिं किल गताः।। १।।

ददौ कृष्णो गुह्यं समरभुवि पार्थाय सुहृदे
शुभं गीताज्ञानं परमसुखदं मुक्तिजनकम्।
मुनिर्वेदव्यासोऽरचयदिह वेदांश्च सकलान्
बहूनां शास्त्राणां जनिरभवदत्रैव महिता।। २।।

महाभीष्मो भीष्मस्तुमुलयुधि योद्धातिबलवान्
निहत्यारीन् वीरः प्रथितरणधीरोऽत्रशयितः।
दधौ प्राणान् पार्थप्रचितशरशय्यामधिगतः
स्मृतौ कीर्त्यास्ते यो निखिलभुवने जीवित इव।। ३।।

अहो भीष्मैर्द्रोणैर्विकटभटशल्यप्रभृतिभिः
सुधीरैर्वीराग्र्यैः समरनिपुणैः कर्णसदृशैः।
समं योद्धुं प्राप्ता सुविदितकुरुक्षेत्रसमरे
सुभीमा भीमाद्याः समरपटुपार्थादिनिपुणाः।। ४।।

नृपो हर्षः ख्यातः प्रथितयशसा दानविषये
कविर्बाणो बाणः सदसि च मयूरोऽपि निपुणः।
तपः पूते क्षेत्रे बुधजनपवित्रेऽतिधवले
सुराः स्वर्गं त्यक्त्वा त्विह भुवि समायान्ति तरसा।। ५।।

अहो धन्यं क्षेत्रं कविगणमनोज्ञं सुरुचिरं
विलोक्येदं तीर्थं सुरगणपवित्रं प्रतिपदम्।
जनास्त्यक्त्वा सर्वं परमपदमाप्तुं कृतधियः
निषेवन्ते पुण्यं परमसुखदं शान्तिजनकम्।। ६।।

अहो धर्मक्षेत्रं जगति विदितं न्यायसदनं
अधर्माणां नाशः कृत इह समूलं भगवता।
विनाशे दुष्टानामभवदिह युद्धे प्रतिदिनं
ध्रुवं तत्संसेव्यं मनुभुवि कुरुक्षेत्रमनिशम्।। ७।।

# विभिन्नतीर्थ–स्तुतिः

## नासिकपञ्चवटी–क्षेत्र–स्तुतिः

धन्यं पञ्चवटी क्षेत्रं यत्र रामः स्वजायया।
न्यवसद् बहुवर्षाणि मुनीन्द्रैरभिपूजितः।।१।।

गोदावरी नदी पुण्या सर्वसौख्यविधायिका।
यस्यास्तटे स्थितं पुण्यं तीर्थं पञ्चवटीति यत्।। २।।

शूर्पणखेति विख्याता रावणस्य श्वसा प्रिया।
चिच्छेद लक्ष्मणस्तस्याः नासिकां यत्र लीलया।। ३।।

तस्मान्नासिकनाम्नेदं तीर्थं चाद्यापि विश्रुतम्।
नौमि पञ्चवटीक्षेत्रं नासिकञ्चापि मुक्तिदम्।। ४।।

## पंढरपुर–स्तुतिः

महाराष्ट्रे प्रान्ते सकलविदितं पंढरपुरं,
सुतीर्थं भक्तानां भवति वरदं विठ्ठलयुतम्।। १।।

तुकारामाद्या ये हरिपदरताः वैष्णवबुधाः
परं शान्तिं प्रापुः तदिह भुवनं नौमि वरदम्।। २।।

## जैनतीर्थ–पालीताणास्तुतिः

गुर्जरे गिरिमालायां पालीताणा विराजते।
अष्टकोटियुताः सिद्धाः यत्र मुक्ताः क्षितौ ध्रुवम्।। १।।

जैनानां मुख्यतीर्थं यत् हिन्दूनां यत्र चादरः।
सर्वदा नौमि तत्क्षेत्रं पावनं मुक्तिदं परम्।। २।।

## गङ्गासागर–स्तुतिः

धन्यं क्षेत्रं परं दिव्यं गङ्गासागरमुच्यते।
यत्र प्राप्ता नदी गङ्गा सागरं स्वपतिं प्रियम्।। १।।

वारं वारं नरा यान्ति तीर्थानि विविधानि च।
गङ्गासागरतीर्थं तु सकृदेव पुनाति नृन्।। २।।

तस्मै तीर्थाय पुण्याय मोक्षदाय शुभाय च।
नमः श्रेष्ठाय मुख्याय गङ्गासागररूपिणे।। ३।।

## मीनाक्षी–स्तुतिः

मीनाक्षी वरदा चकास्ति भुवने श्रीमद्रपुर्यां शुभा,
माता सुन्दरगोपुरैः परिवृता दिव्यैश्चतुर्भिर्यतः।
पुण्या पुष्करिणी बभूव शरणं पापात्मनो वज्रिणः
यत्रास्ते सविधे हरश्च जननी पायादपायात्सदा।। १।।

## गोकर्ण–स्तुतिः

गोकर्णे शिवशङ्करस्य वरदं लिङ्गं मुनीन्द्रार्चितं,
लोके यः प्रथितो 'महाबल' इति प्रान्ते च कार्णाटके।
नानासिद्धगणैर्नुतो मृगपतिर्मुक्तिप्रदो राजते
तं शर्वं गिरिशं भजे स्मरहरं दिव्यात्मतत्त्वान्वितम्।। १।।

## ७. प्रयागराज–स्तुतिः

प्रयागराजेऽत्र वसन्ति देवा
स्त्यक्त्वा दिवं वै भुवि दिव्यतीर्थे।
धन्याश्च मर्त्याः मुनयश्च जीवाः
ये संगमं प्राप्य सुखं लभन्ते।।१।।
गङ्गा च दिव्या सुरलोकवन्द्या
सा भानुजा या यमराजपूज्या।
यत्र स्थिता पूज्यसरस्वती च
दिव्या स्थली सा भुवि कीर्तनीया।। २।।

सम्प्राप्य देवा न पुनः प्रयान्ति
स्वर्गं कदाचित् धरणीतलात् ते।
खगाश्च वृक्षाश्च नराश्च धन्याः
तिष्ठन्ति ये संगमतीर्थराजे।। ३।।

श्रीराघवेन्द्रोऽपि जगाम यत्र
श्रीसीतया तीर्थमिदं पवित्रम्।
योगस्थिता ये मुनयो नरेन्द्रा
नूनं लभन्तेऽत्र सुखञ्च दिव्यम्।। ४।।
प्रयागराजं भुवि लोकवन्द्यं
मुनीन्द्रदेवाश्च मुदा लभन्ते।
धन्या त्रिवेणी भुवने प्रसिद्धा
स्वर्गप्रदा या सुलभा सदाऽस्ते।। ५।।

प्रयागराजाय नमोनमस्ते,
पूज्याय धन्याय नमो नमस्ते।
स्वर्गप्रदायाथ सुखप्रदाय
श्रीतीर्थराजाय नमो नमस्ते।। ६।।

# मिथिलापुरी–महात्म्यम्

धन्यास्ति लोके मिथिलापुरी सा
या राजधानी जनकस्य चासीत्।
आध्यात्मचिन्ता प्रतिगेहमत्र
नित्यं जनानां विदुषां समेषाम्।। १ ।।

जाता सा यत्र सीता रघुपतिदयिता जानकी लोकमाता,
नानाशास्त्रेषु दक्षा कपिल–मिथि–दृशो गौतमाद्याः प्रकाण्डाः।
वाचस्पत्याद्यपूर्वा उदयनसदृशा लेभिरे जन्म यस्यां
सा दिव्या भूमिरुक्ता सुविदितमिथिला तीरभुक्तिः प्रशस्ता।। २ ।।

यस्मिन् देशे निवसति सदा चिन्तनासक्तयोगी
यस्मिन् देशे विलसति सदा कामनासक्त–भोगी।
भोगी योगी प्रतिगृहमहो राजते चात्र चित्रं
धन्यो देशः प्रथितमिथिला स्वर्गतुल्या धरायाम्।। ३ ।।

गङ्गा यत्र प्रवहति सदा सन्निधौ देवपूज्या
धन्या रम्या वहति कमला वाग्वती चातिपुण्या।
सिञ्चन्ती यां विलसति सदा गण्डकी पूरयुक्ता
धन्या सा हि प्रथितमिथिला सारभूता धरायाम्।। ४ ।।

यत्र विज्ञवदनेषु सर्वदा नृत्यति प्रतिगृहं सरस्वती।
जानकीजनकभूमिरीक्ष्यतां धन्या सा मिथिला महीतले।। ५ ।

मीमांसा–तर्क–वेदाध्ययनपटुतराः शास्त्रपारङ्गतास्ते
वाचस्पत्याद्यनेके विबुधवरजना यत्र चापुश्च जन्म।
गङ्गेशो मण्डनाख्यः जनकनृपसुता याज्ञवल्क्यादयश्च,
धन्या सेयं नमस्या सुविदितमिथिला कामदा मोक्षदा च।। ६ ।।

कौशिकी–गण्डकी युक्ता वाग्वती–कमलावृता
तीरभुक्तिरिति ख्याता मिथिला पुण्यदा स्मृता।।७।।

विदेहः प्रोच्यते लोके गुणग्रामसमन्वितः।
वीरेश्वरेण सहितो भैरवेश्वरमण्डितः।।८।।

श्रौताद्वैतमतप्रचारणपरः श्रीशङ्करः शङ्करो
मुग्धोऽभूत्स निशम्य संस्कृतवचो दासीमुखादद्भुतम्।
''कीरा यत्र गिरो गिरन्ति सततं प्रामाण्यवादान्वितम्''
धन्यं क्षेत्रमिदं प्रशस्तधवलं विद्वज्जनैः सेवितम्।। ९।।

शास्त्रे दिग्विजयक्रमेण चलितो मान्यो बुधः शङ्करः
मूकीकर्तुमिहागतश्च मनसा श्रीमण्डनं पण्डितम्।
जल्पे मण्डनजायया सह यदा मौनं चिरं संश्रितः
धन्या सा मिथिलापुरी विजयते शास्त्रेषु वादेषु च।।१०।।

शुकोऽपि मेने चिरकालशान्तिं
स्थातुं पवित्रे जनकालये यः।
उवास यस्यां श्रुतिचिन्तनार्थं
धन्या स्मृता सा खलु तीरभुक्तिः।।११।।

अष्टावक्रो विदितविदितः प्राप्तवान् तीरभुक्तिं
शास्त्रे जित्वा विविधविदुषः ज्ञानवान् पण्डितोऽत्र।
गार्गी सीतात्वजनि सुलभा शास्त्रमार्गे प्रवीणा
धन्या सेयं प्रथितनगरी तीरभुक्तिर्धरण्याम्।।१२।।

योगीश्वरो महातेजा याज्ञवल्क्यो महामुनिः।
उवास मिथिलायां यो जनकस्य सभास्थितः।।१३।।

नैके जन्म च लेभिरे सुकवयो मीमांसकास्तार्किकाः
धन्या सा मिथिला चकास्ति भुवने ज्ञानस्य यज्ञस्थली।।१४।।

गण्डकीतीरमारभ्य चम्पारण्यान्तकं प्रियम्।
विदेहाख्यं परं पूज्यं देशं नौमि पुनः पुनः।।१५।।

लक्ष्मणा कौशिकी ख्याता कमला गण्डकी पुनः
जलाधिका दुग्धवती विरजा मण्डना तथा।।१६।।

वाग्वती यमुनी चापि तथा बिल्ववती मता।
अन्याश्च सन्ति जलदाः नद्यो यत्र जलप्रदाः।।१७।।

विभाण्डको महायोगी याज्ञवल्क्यश्च धीधनः।
अष्टावक्रादयश्चासन् मिथिलायां सुपण्डिताः।।१८।।

आध्यात्मविद्याश्रयिणो नृपास्ते, योगीश्वरो ये जनकादयस्तु।
संलेभिरे जन्म मुरारिमिश्राः, धन्यो विदेहः खलु दिव्यदेशः।।१९।।

अहल्या मान्या सा परमपतिभक्ता सुविदिता
तथा पुण्यश्लोकस्त्विह मुनिवरो गौतम इति।
छलादिन्द्रद्वारा कृतमतिघृणं कार्यमशिवं
स्वयं साक्षाद्रामः स्वपदरजसा त्राणमकरोत्।। २०।।

समुत्पन्ना महापुण्या सीताराघववल्लभा।
अत्रैव मिथिलायान्तु जनकस्य सुता सती।। २१।।
भैरवाख्यो महादेवः शङ्करः कपिलेश्वरः।
क्षीरेश्वरः शिलानाथः वीरेश्वर–जलेश्वरौ।। २२।।

महादेवः सदा पूज्यः कल्याणेश्वरशङ्करः
अन्ये कूपेश्वराद्या वै कुशेश्वरसमाः शिवाः।
वसन्ति मिथिलायां ते मुनिवृन्दैः समर्न्विताः
सिंहेश्वरस्तथा चान्ये घटेश्वरसमाः सुराः।। २३।।

अद्यापि मिथिलायान्तु ग्रामे ग्रामे विचक्षणाः।
संन्यस्ता वीतरागाश्च शास्त्रदक्षाश्च पण्डिताः।। २४।।

विशाला मिथिला रम्या शस्यश्यामलसंयुता।
दिव्या स्वर्गोपमा चापि प्रणम्या सिद्धिदा तथा।। २५।।

स्वनामधन्या नगरी जनकेनाभिपलिता।
मिथिला सर्वतः पुण्या सुराणामपि दुर्लभा।। २६।।

यत्र स्त्रीणां सुनयनफलं दर्शनेनैव लभ्यं
यस्यामाम्रक्षितिरुहफलं स्वादुपूर्णं विशिष्टम्।
भुञ्जानानाममृतनिकृतिर्जायते मर्त्यलोके,
धन्या सेयं भवति मिथिला सर्वदा लोकवन्द्या।। २७।।

बङ्गप्रदेशात् स तु वासुदेवो यः सार्वभौमो मिथिलामवाप।
नैयायिकः पक्षधरो यदासीत् शास्त्रार्थकर्त्ता कुशलो धरायाम्।। २८।।

उदयन इति तर्के ''त्वेक एवाद्वितीयः''
अलिखदतियुक्तं न्यायपुष्पाञ्जलिं यः।
सकलभुवनधाता त्वीश्वरो यत्र साध्यः
विबुधजनसुपूज्यः पूज्यते लोकवन्द्यः।। २९।।

उद्यानवासिना चात्र मैथिलेन मुदा शुभा।
उमारमणविप्रेण व्यलेखि मिथिला–स्तुतिः।। ३०।।

चतुर्धामादीनां विततनतिना तापशमनं,
विवेकग्रन्थेऽस्मिन् सकलशुभदं मुक्तिजनकम्।
सुगीतं सर्वेषां जगति सुखशान्त्यै जनिभृता–
मुमानाथेनेदं व्यरचि रुचिरं तीर्थशतकम्।।

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य–विद्यावाचस्पति डा. उमारमणझाशर्मविरचितायां विवेकसहस्र्यां तीर्थशतकं सम्पूर्णम्।

# ८.व्यवहारशतकम्



यस्यां सन्ति समस्तवेदरचना: वेदाङ्गशास्त्रै: समं
यस्यां धर्मविचारशास्त्रमखिलं तन्त्राण्यनेकानि च।
मीमांसादिसमस्तदर्शनमहो पुष्णाति यस्या: श्रियं
भाषा साऽस्तु सुकीर्तिता भुवि यथा सर्वै: प्रतिज्ञायताम्।।

# वस्त्रम्

[१]विद्यावस्त्रविभूषितो नरवरः सौम्यं वपुः सद्वचः
यो धत्ते विभवं सदैव मतिमान् प्राप्नोत्यसौ गौरवम्।
सद्वस्त्रैः समलङ्कृतो बुधवरो मान्यश्च धन्यः प्रियः
नूनं नैव कदापि कोऽपि भुवने वस्त्रं विना शोभते॥१॥

सद्वस्त्रं परिधाय सौम्यवपुषा नूनं यशो लभ्यते
सद्वस्त्रेण समन्वितो बुधवरो राज्ञः सभापण्डितः।
गन्तुं नैव गृहाच्च कोऽपि मनुजः शक्तः सुवस्त्रं विना,
नग्नः कोऽपि न गण्यते भुवि कदाप्येतद्विचित्रं सदा॥२॥

हारो नैव च कुण्डलं न वलयो वस्त्रं विना शोभते
सद्वस्त्रेण विभाति चन्द्रवदना बाला प्रियेणादृता।
वस्त्रेणैव सदावगुण्ठनवती पत्युः प्रिया शोभते
हा वस्त्रं यदि नास्ति कष्टमनिशं गन्तुं न शक्तः क्वचित्॥३॥

सद्वस्त्रेण सुशोभितो नरवरः पट्टाम्बरेणापि वा
माल्यैश्चन्दनभूषितश्च मुदितः राज्ञः सभायां स्थितः।
मुर्खश्चापि सुपूज्यते सदसि यो मौनाच्च चातुर्यतः
नूनं वस्त्रवलेन भूमिवलये संराध्यते सर्वदा॥४॥

के वैद्याः क्व च मन्त्रिणः क्व च बुधाः के वा नरा रक्षिणः
का राज्ञी क्व च सेविका क्व महिला देशस्य संरक्षिका।
वाक्कीलः क्व च नर्सरूपमहिला क्रीडारता के च ते
तेषां वस्त्रविशेषणेन सहसा ज्ञातुं समर्थो जनः॥५॥

---

[१]विद्यया वपुषा वाचा वस्त्रेण विभवेन च।
वकारैः पञ्चभिर्युक्तो नरः प्राप्नोति गौरवम्॥

ओणं वा नवरात्रिरस्तु सुखदा दीपावली होलिका,
ईदो वा विशुपर्व पोङ्गलसमाः ये सन्ति पर्वादयः।
दीनानां धनिनां गृहेषु निखिलं वस्त्रं नवीनं ध्रुवं
पुत्रा मित्रसहोदराश्च महिला वाञ्छन्ति मोदाप्तये।। ६।।

वस्त्रं विना नहि कदापि विभाति कायः
कायं विना भवति नैव कदापि सभ्यः।
सभ्यं विना नहि कदापि नरः सुपूज्यः
धिग्जीवनं यदि न वस्त्रमतीव भव्यम्।। ७।।

# गृहम्

ग्रीष्मे भास्करतीव्रतापकिरणाद् वृष्टेश्च वर्षाऋतौ
हेमन्ते त्वतिशीतलाच्च पवनाद् वाताभिघाताच्च यत्।
सर्वेषां शरणं स्वकीयभवनं संरक्षकं प्राणिनां,
नूनं वेश्मसमं न हर्षजनकं किञ्चिद् दरीदृश्यते।।१।।

तावन्नैव च यानकुञ्जररथाः लोकप्रिया भूतले
यावन्नैव स्वकीय—सौम्य—सदनं सम्प्राप्यते मानवैः।
भद्रं सौख्यनिधानमेव भवनं संलक्ष्यते सर्वदा
धन्यास्ते मनुजा स्वकीयभवने वासं न ये कुर्वते।। २।।

पूर्वं शैलगुहासु चाप्य शरणं वृक्षाग्रवासं ततः
तत्पश्चात् तृणपत्रनिर्मितगृहे वासं चरकाथ यः।
सोऽयं दिव्यगृहं विधाय मनुजो रात्रिंदिवं भूतले
स्वर्गानन्दविलासमेव कुरुते नित्यं प्रसन्नः सुखी।। ३।।

धन्यः सोऽस्ति महीतले नरवरः स्वस्माद् गृहान्नैव यो
गत्वा दूरमुपागतः परगृहं खेदावहं निश्चयम्।
स्वस्मिन्नेव गृहे यथा प्रतिदिनं सौख्यं परं लभ्यते
नूनं नैव कदापि चान्यसदने शान्तिः सुखं वा क्वचित्।। ४।।

गेहे यत्र वसन्ति पूज्यपितरौ वृद्धौ तथा सोदराः
क्रीडन्तः शिशवस्तथा च रमणी गार्हस्थ्यधर्मान्विता।
पुत्राश्चापि गुणान्विताः सुखकराः पुत्री च शीलान्विता
धन्यं स्वर्गसमं गृहं सुकथितं तत्सर्वदं शान्तिदम्।। ५।।

# विद्वन्महिमा

धन्या सा जननी तथा च जनको वंशश्च धन्यस्तथा,
सम्पूर्णा वसतिः प्रमोदभरिता धन्यं तथा मण्डलम्।
राष्ट्रञ्चापि महीतले सुविदितं पुण्यात्मनः कस्यचिद्
जातस्यैव महात्मनश्च विदुषो ध्वान्तः प्रकाशं गतः।। १।।

बाल्ये वेदचतुष्टयस्य विधिवद् वेदाङ्गषट्कस्य च,
सम्यग्ज्ञानमुपार्जितञ्च विदुषा षड्दर्शनानान्तथा।
येनाशेषमधीतमुत्सुकतया तन्त्रं समस्तं द्रुतं
तं पाण्डित्ययुतं बुधं नरवरं वन्दे सदा सादरम्।। २।।

सत्कार्ये निरतः सदा बुधवरः सद्ध्यानमग्नस्तथा.
नानाशास्त्रविचारचिन्तनरतो मान्यः सतामग्रणीः।
स्वार्थो नास्ति परोपकारनिरतो ज्ञानाग्रगण्यो बुधः
वन्द्यः सोऽस्ति महीतले नरवरो वैदुष्यरत्नाकरः।। ३।।

यः पूजां कुरुते दिवा निशि मुदा देवस्य सर्वात्मना,
शिष्याणां हितचिन्तको बुधवरो भक्तो गुरोः सर्वथा।
जित्वा यश्च षडिन्द्रियाणि विमुखो रागादिदोषात्सदा
धन्यः सोऽस्ति विचारशीलपुरुषः स्तुत्यश्च वन्द्यस्तथा।। ४।।

हर्षो नैव च विस्मयो हृदि कदाप्येतद्विचित्रं सतः,
रागो नैव कदापि तुच्छविषये द्वेषो न कुत्रापि च।
लीनोऽसौ मनुजो महामतियुतो ध्यानस्थितो ब्रह्मणि,
नूनं मर्त्यजनोऽपि शुभ्रयशसा देवैश्च वन्द्यो बुधः।। ५।।

आचारे निपुणो विचारचतुरो गाम्भीर्यमासादयन्
सर्वत्रैव मुदान्वितो बुधवरो धर्मार्थकार्ये रतः।
यो धैर्यान्न पराङ्मुखो हि विपदः धर्मे स्थिरः सर्वदा
शास्त्रारण्यमृगाधिपो विजयते लोके सदा पूजितः।। ६।।

येनाकारि सदैव शास्त्रविपिने स्वच्छन्दसञ्चारणं,
येनापाठि कठोरतर्कविषयः स्वाध्यायमग्नेन च।
येनालेखि निबन्धसारनिचयः क्लिष्टस्य शास्त्रस्य च
तस्मै श्रीनरपुङ्गवाय विदुषे सर्वात्मना नो नमः।। ७।।

## नववर्षस्य शुभकामनाः

शुभे नूत्ने वर्षे प्रसरतु यशो वः प्रतिदिनं
धनं धान्यं सौख्यं भवतु सदने शान्तिरतुला।
परं भक्ता रक्ता सततमनुकूला च गृहिणी
ध्रुवा भक्तिर्देशे भवतु चिरमायुश्च भवताम्।। १।।

तवास्तु नित्यं यशसः प्रतिष्ठा
सामाजिकी चास्तु नवप्रवृत्तिः।
विद्या जनेभ्यः सुखदायिनी स्यात्
उमापदे ते मतिरस्तु शुद्धा।। २।।

नव–नव–गरिमाणं प्राप्य विद्या–प्रमाणं
शुभमखिलविधानं सौख्ययुक्सन्निधानम्।
प्रसरतु नववर्षे श्रीमतां वीततर्षे
विनय–विहित–मुद्रः साधु वाञ्छामि भद्रम्।। ३।।

ऋद्धिं समृद्धिञ्च सुखं च तन्वद्
यशश्च तन्वद् विमलं जगत्याम्।
हर्ष प्रकर्षं हृदि चापि वर्षद्
वर्षं नवं मङ्गलमातनोतु।। ४।।

भूयाद्भव्यमिदं सुकीर्तिजनकं नूत्नं प्रशस्तं सदा
वर्षं हर्षमयं प्रकर्षरुचिरं सौभाग्यसम्वर्धकम्।

वर्धन्तां सुखभोगयोगनिधयो विद्यावतां श्रीमतां
कुर्वेऽहं शुभकामनाः प्रतिपलं नत्वा च शक्तिं पराम्॥ ५॥

सदाऽस्तु नूत्ना यशसः प्रतिष्ठा
वर्षे नवीने प्रभुता च वृद्धिः।
श्रीश्चापि गेहे भवतोऽस्तु नित्या
शिवः प्रसन्नः सुखदा च दुर्गा॥ ६॥

किरतु किरणपुञ्जं कामदं कृष्णदेवः
भवतु भुवि भवो वो भव्यभावस्य हेतुः
लसतु ललित–लीलालास्य–युक्ता च लक्ष्मी–
र्दिशि दिशि शुभदं स्यान्नूतनं हर्षवर्षम्॥ ७॥

गेहे ते प्रसरीसरीतु कमला सौभाग्य–मन्दाकिनी
वाग्देवी रसनास्थिताऽस्तु सततं वैदुष्यसंवर्द्धिका।
दुर्गा दुर्गतिहारिणी प्रभवताद्गर्वापहा वैरिणां
नित्यं धान्यधनर्द्धिसिद्धिसुखदं वर्षं सहर्षं भवेत्॥ ८॥

किरतु जगति कीर्तिं धीधनो ध्यानचित्तः
वितरतु हृदि मोदं मे भवाञ्छास्त्रचक्षुः।
नवनवसुखभाग्यं वर्द्धतां श्रीमतां वः
प्रसरतु शुभदं शं सर्वतः सर्वदा च॥ ९॥

नूतने शुभदे वर्षे श्रीमतां कामये ध्रुवम्।
धनं धान्यं सुखं पूर्णमायुरारोग्यमीश्वरात्॥ १०॥

# संस्कृतं विश्वभाषा

हरति सकलचित्तं संस्कृतं देववाणी
वितरति बहुमोदं भारतीवक्त्रपूतम्।
विविधगुणसमेतं भासते सर्वपूज्यं
भवतु रुचिरमेतत् संस्कृतं विश्वभाषा।। १ ।।

भवतु भवतु लोके भारती सर्वपूज्या
जयतु जयतु देशे संस्कृतं देववाणी।
हरतु सकलदोषं श्रीयुता भारती नः
वितरतु दिशि सिद्धिं सर्वदा ज्ञानमाता।। २ ।।

अवतु जगति सर्वान् भारती भास्वती सा
जयतु जयतु विश्वे संस्कृतं देववाणी।
भवतु भवतु शीघ्रं राष्ट्रभाषा यथेयं
कुरुत कुरुत यूयं तादृशं सुप्रयत्नम्।। ३ ।।

भारते सर्वदा भातु सर्वथा भारती शुभा।
राष्ट्रभाषा यथेयं स्यात् तथा यत्नः सदाऽस्तु नः।। ४।।

कण्ठे कण्ठे विलसतुतरां भारते देववाणी
गेहे गेहे, लपतु सुजनः संस्कृतं गौरवेण।
मार्गे मार्गे वदतु सततं देवभाषां सुबुद्धः
पूण्ये कार्ये निखिलसमये सर्वदा संस्कृतं स्यात्।। ५ ।।

धन्यां संस्कृतभारतीं च महतीं स्वर्लोकपुण्यप्रभां
वाणीं ब्रह्ममुखारविन्दनिलयां त्रैलोक्यसन्तारिणीम्।
देवीं ब्रह्ममयीं सुरार्चितगिरं पीयूषनिःस्यन्दिनीं
वन्दे दर्शननीतिशास्त्रललितां विश्वेश्वरीं मातरम्।। ६ ।।

# भाषाऽमृतं संस्कृतम्

भाषाणां जननी स्मृता दिवि पुरा वाणी सुराणां शुभा
या लोकद्वयसाधिनी रसमयी गीर्वाणवाणी नृणाम्।
सा प्राणैश्च यथा भवेत् ध्रुवमहो राष्ट्रस्य भाषाऽचिरा–
दित्थं संस्कृतिरक्षणाय सततं सर्वैः प्रतिज्ञायताम्।।१।।

यस्यां सन्ति समस्तवेदरचनाः वेदाङ्गशास्त्रैः समं
यस्यां धर्मविचारशास्त्रमखिलं तन्त्राण्यनेकानि च।
मीमांसादि–समस्त–दर्शनमहो पुष्णाति यस्याः श्रियं
भाषा साऽस्तु सुकीर्तिता भुवि यथा सर्वैः प्रतिज्ञायताम्।।२।।

देशस्यास्य सुसंस्कृतेः प्रतिपदं वांछत्यहो योन्नतिं
या वाणी शुभशङ्करी हितकरी ज्ञानाकरी श्रीकरी।
या भाषा दिवि भासते सुरुचिरा भव्याऽस्तु सा भारते
इत्थं धर्मसमर्थकं सुमधुरं भूयात् सदा संस्कृतम्।।३।।

लोकाचार–विचार–सारभरिता याऽस्ते गिरा स्वर्गदा
ज्ञानानामतुलं निधानमखिलं श्रीसंस्कृतं भूषणम्।
राष्ट्रस्यास्य सुगौरवं सुमधुरं नः संस्कृतेः रक्षकं
भुयाद् भव्यमिदं नितान्तसरलं दिव्यं वचः संस्कृतम्।।४।।

विज्ञानां प्रतिमन्दिरं प्रतिमुखं वागस्तु दैवी परा
भूयाल्लेखनकार्यमप्यतिदृढं वाण्याऽनया केवलम्।
बालानां प्रतिबोधनं यदि भवेत् सर्वत्र सत् संस्कृतेः
नूनं राष्ट्रमिदं तु शैलशिखरं गर्वेण सम्प्राप्स्यति।।५।।

यज्ञानां सुरभाषयैव सकलं सर्वत्र देवार्चनं
हिन्दूनां सकलाश्च षोडशविधाः संस्काररूपाः क्रियाः।
यात्रायां शुभकार्य–साधन–विधावद्यापि सा स्तूयते
नूनं सा सुरभारती विजयते पीयूषयूषात्मिका।।६।।

## शुभकामना

मेदिन्यां सकलास्त्यजन्तु कुटिलं हानिप्रदं दुष्कृतं
सौहार्दं जनमानसे प्रतिगृहं सर्वत्र देदीप्यताम्।
एकीभूय निरन्तरं परहितं कुर्य्युः प्रसन्ना नराः
भूयासुः प्रतिमन्दिरं च सुभगा सम्मानिताः स्वामिभिः।। १।।

भूयाद् भारतराष्ट्रमेकमतुलं सत्यस्य तेजोमयं
वर्धन्ताञ्च सदा सतां मतिमतां लोकप्रियाः सत्क्रियाः।
सम्पूर्णे वसुधातले विलसतु द्राक् शान्तिभावो नृणां
राष्ट्रद्वेषविवर्जितं ननु जनाः लोकोपकारे रताः।। २।।

पूर्णा च पृथ्वी सुजनाः प्रसन्नाः
दारिद्रियरोगादिविवर्जिताश्च।
अज्ञानशून्या भुवि सन्तु सर्वे
प्रवर्ततां भारतराष्ट्रभाग्यम्।। ३।।

## शुभविवाहावसरे माङ्गलिकाः श्लोकाः

स पायाद्धेरम्बो नगपतिसुता शम्भुरनिशम्
विभुर्विष्णुर्देवो रविरपि भृशं पान्तु सकलाः।
ग्रहाः देवैर्युक्ताः सुरमुनियुता हर्षभरिताः
वरं वध्वा सार्धं सततमनुकूलाश्च विबुधाः।।१।।

वरं सुशीलं सरलां वधूञ्च
पायात्सदा देवगणः प्रसन्नः।
हर्षं प्रकर्षं भुवि भूरि वर्षन्
करग्रहोऽयं चिरमस्तु तृप्त्यै।। २।।

# त्राता सुतो दुर्लभः

यस्यार्थं क्रियते करग्रहविधिर्नास्ते गतिर्यं विना
नात्रैवाथ परत्र वापि सुगतिः प्रोक्तञ्च शास्त्रे वचः।
सत्पुत्रास्तु विमोचयन्ति नरकाल्लोकार्णवाद् यत्नतः
आत्मा वै तनुजः स्मृतस्तु नरकात् त्राता सुतो दुर्लभः।।१।।

सत्कीर्त्यास्ति विवेकशीलवचसा लोकेषु सम्मानितः
कार्याकार्यविवेकवांश्च तनयो दानी तथा धार्मिकः।
कर्त्तुं वंशसमुन्नतिं बहुविधां नक्तं दिवं तत्परः
भाग्येनेशकृपावशाच्च नरकात् त्राता सुतो दुर्लभः।। २।।

आयुष्मान् विनयी नितान्तसरलः ख्यातस्तु यो भूतले,
विद्यावान् समुदारकीर्तिधवलो दानैकनिष्ठस्तथा।
प्रज्ञावांन् भुवि भूरि भूतिकरणो व्यापारदक्षः प्रियः
श्रीमान् यस्य गृहे चकास्ति तनयो धन्यः स मान्यो नरः।। ३।।

सोढ्वा क्लेशशतं न यो विचलितः सन्न्यायमार्गात्क्वचित्
हर्तुं कष्टमहर्निशं प्रयतते प्राणैश्च पित्रोर्यतः।
ईर्ष्याद्वेषकुभावनादिरहितो राष्ट्रोन्नतौ कर्मठः
सौभाग्येन कदाचिदेव जननीगर्भात्सुतो जायते।।४।।

नो मित्रं न पिता न बान्धवजनो नैवात्र वा सोदरः
त्रातुं नान्यजनः कदाचन यथा पुत्रः क्षमो भूतले।
पिण्डं दातुमतः स एव विदितस्तीर्थेषु पित्रोः कृते
आत्मा वै तनुजः स्मृतोऽथ नरकात् त्राता च पुत्रः सदा।।५।।

पित्रोर्नास्ति गतिर्यदा कुतनयो भाग्यक्षयाज्जायते
मूर्खः तातकलङ्कमेव तनुते वंशस्य विध्वंसनम्।

सत्पुत्रस्तु कुलस्य दीपकसमः सर्वत्र विद्योतते
कुक्षिर्मातृजनस्य चास्ति सफलः पुत्रः सुपुत्रो यदि।। ६ ।।

प्राप्यैवं न धनं न बन्धुसुजनं यानं सुखं वा क्वचित्
सम्मानञ्च विलोक्य नैव लभते तुष्टिं क्वचित् तादृशीम्।
सत्पुत्रस्य मुखं समीक्ष्य सहसा माता प्रसन्ना यथा
आत्मा वै तनुजः स्मृतोऽथ नरकात् त्राता स पुत्रः सदा।। ७ ।।

## कलिर्विजयते

माता नैव तथा प्रिया, प्रियतमा जाया यथा दृश्यते
तातस्यापि न चादरो निजगृहे पत्न्याः पितुर्यादृशः।
भ्राता चापि तिरस्कृतः प्रतिगृहं श्यालः सदा सत्कृतः
दुष्टानां भवतीह शासनमहो वन्द्योऽधुना सत्कलिः।। १ ।।

ये कुर्वन्ति परोपकारमतुलं तेषां विरोधो भुवि,
धर्माचाररताश्च ये च भुवने ते वञ्चका इत्यहो।
अर्थेनैव जना भवन्ति सुजनाः ह्यर्थं विना दुर्जनाः
चेत्थं यत्कलिराजशासनमहो तस्मै नमः सर्वथा।। २ ।।

पुत्रान् स्वानथ मातरञ्च मनुजाः सन्त्यज्य पाने रताः,
भार्यां स्वां निजगेहिनीं न मनुते कश्चिज्जनो लम्पटः।
धूर्ताः सन्ति महीतले दशगुणाः सर्वत्र सम्मानिताः
ह्य कष्टं कलिकाल एव सबलः क्लेशार्दिताः सज्जनाः।। ३ ।।

विद्वांसो बहवो भवन्ति भुवने येषां तथा नादरः
हा कष्टं सुलभा न सज्जनगृहे चान्नं न वस्त्रादयः।
धूर्तानां सदने सदाऽस्ति सुलभं सर्वं प्रियं सौख्यदं
सर्वं यत्कलिनायकस्य कृपया संलक्ष्यते चाधुना।। ४ ।।

मिथ्याचाररता विलासभरिता मद्यप्रिया मानवा:,
स्वार्थान्धाश्च परापकारनिरता पापे रता दुर्जना:।
नीचा ये धनिकाश्छलादिकुशला: कापट्ययुक्ता: सदा
पूज्यन्तेऽत्र महीतले कलिकृपां सम्प्राप्य धूर्त्ता: क्षितौ।।५।।

# समस्यापूर्ति:

## १. संस्कृतं विश्वभाषा

इह परसुखमूलं सर्वशान्त्येकचूलम्
अविनयहतिशूलं सभ्यतासद्दुकूलम्।
प्रवहितसृतिकूलं मोक्षसिद्ध्येकमूलं
लसतु सदनुकूलं संस्कृतं विश्वभाषा।।१।।

हरति सकलचित्तं संस्कृतं देववाणी
वितरति बहुमोदं भारतीवक्त्रपूतम्।
विविध–गुण–समेतं भासते सर्वपूज्यं
भवतु रुचिरमेतत्संस्कृतं विश्वभाषा।। २।।

## २. चेखिद्यते मे मन:

कामं लोकहितार्थचिन्तननृणां नैवास्ति यत्रादर:
पुण्यानां सुमहात्मनां मतिमतां दुष्टैश्च निन्दा वृथा।
विज्ञा नीचजनैस्तु यत्र सततं दुत्कारभाजो भृशम्
सर्वं वामफलं विलोक्य सहसा चेखिद्यते मे मन:।। ३।।

## ३. क्वाहो वयं प्रस्थिताः ?

## महाप्रस्थानसमये भीमस्य युधिष्ठरं प्रत्युक्तिः

नष्टं राज्यसुखं धनञ्च सकलं नष्टं सुमित्रं परं,
नष्टा बन्धुसमस्तकौरवजनाः नष्टाः सुता भ्रातरः।
नष्टा नो गुरवस्तथा च सुजनाः क्षेत्रे तु धर्मे कुरोः
हा भ्रातः क्व गताः समस्तसुहृदः क्वाहो वयं प्रस्थिताः?

## सीताहरणानन्तरं रामस्योक्तिः

रामो दाशरथिर्गुणाकरविभुः भानोः कुले भूषणं
सीतालक्ष्मणसंगतिं च विदधन् नित्यं सुखी कानने।
हा सीता दशमौलिना खलु हृता प्राणप्रिया जानकी
दृष्ट्वा नैव विलप्य चाह भगवान् क्वाहो वयं प्रस्थिताः।। २।।

## कृष्णस्य द्वारकागमनान्तरं सप्तर्षीणामुक्तिः

वृन्दारण्यतपोवनं भवहरं प्राप्ता नभोमण्डलात्
पुण्यारण्यविहारिणं मधुरिपुं द्रष्टुं च सप्तर्षयः।
शून्यं प्राप्य समस्तगोकुलवनं शून्यं निकुञ्जं प्रभोः
प्राहुस्ते विकला विदीर्णहृदयाः क्वाहो वयं प्रस्थिताः।। ३।।

## भ्रष्टयतीनामुक्तिः

लब्धुं भक्तिरसामृतं सुरुचिरं मुक्तिप्रदं शाश्वतं,
त्यक्त्वा स्वर्गसमं गृहस्थभवनं तीर्थेषु पीतं जलम्।
प्राप्यैवं सरसं तु जम्मुनगरं द्रष्टुं परां वैष्णवीं
विद्धाः स्मोऽत्र वराङ्गनेक्षणशरैः क्वाहो वयं प्रस्थिताः।। ४।।

## ४. विजयन्ते सुकवयः

दिवान्धारूढ़ा त्वं गणयसि न कस्यापि गुरुतां,
मदान्धा वित्तान्धास्तवगुणयुता ये जड़जनाः।
सदा मूका मूर्खा बक इव सभामध्यगणिताः
परं मे विद्वांसो जगति विजयन्ते सुकवयः।। १ ।।

अरे लोले लक्ष्मि! त्वमसि मम वाग्दूषणकरी
तवेयं दुर्मेधा मम भवति खेदाय चपले।
सदाऽपूज्या मर्त्याश्चलधनमदान्धास्तव जनाः
बुधाः कीर्त्या नित्यं भुवि तु विजयन्ते सुकवयः।। २ ।।

सदा मूर्खा लोके जगति विदितास्ते प्रियजनाः
सुसाम्राज्यं प्राज्यं बुधजनबलेनैव कुरुते।
परं मे वाग्देव्याः गुरुपदमलङ्घ्य सुधियः
सुधाधारासारैः जगति विजयन्ते सुकवयः।। ३ ।।

## ५. विषकृमिन्यायेन जीवाम्यहम्

यत्रासीन्मम यौवने रतिसमा प्राणप्रिया सुन्दरी
पुत्रास्तत्र सदा ममैव वशगा भृत्यास्तथा भ्रातरः।
आसंस्तेऽद्य गता न मां प्रतिरता मायाकुला व्याकुलाः,
जाया पुत्र विवर्जितो विषकृमिन्यायेन जीवाम्यहम्।। १ ।।

## ६. नववर्षहर्षः

वीरेन्द्रराजो जनतासु पूज्यः प्रजाजनानामुपकारकर्ता।
करोतु कल्याणमयं सुकार्यं भूयाद् ध्रुवं वो नववर्षहर्षः।। १ ।।

## ७. जीवनपूर्णचन्द्रः

शान्तं नभो विकसितं विविधं प्रसूनम् धान्यं निरीक्ष्य बहुशः कृषकाः रमन्ते।
रात्रौ सुजानुललनानलतृप्तमोदः नूनं प्रफुल्लजनजीवनपूर्णचन्द्रः॥ १॥

## ८. सोऽयं वसन्तो गतः

धन्या सा यमुनातटी मधुरिपोः पीता पटी नेक्ष्यते
नो वा कुञ्जकुटीरकेषु सुलभः वंशीरवः श्रूयते।
आनन्दोच्छलिता इव प्रचलिता नैवाद्य गोपाङ्गना
शून्या गोकुलमण्डली समभवत् सोऽयं वसन्तो गतः॥ १॥

## ९. तज्जीवनं जीवनम्

तज्जीवनं जीवनमत्यनर्घं कृष्णेऽर्पितं चित्तसमस्तसौख्यम्।
सुधारसं भक्तिरसं निपीय ध्रुवं जनोऽस्मिन् लभतेऽपवर्गम्॥ १॥

दुष्टानां दलनाय जीवनमहो किं स्वोदरापूरणैः
साधूनामभयं प्रदाय सुधियो वीराश्च धीरास्तथा।
मार्गे नित्यनिरन्तरार्त्तिसहने दक्षाः सदा साधवो
ये कुर्वन्ति नराः परोपकरणं तज्जीवनं जीवनम्॥ २॥

बाल्ये शास्त्रमधीत्य येन सकलं ज्ञानामृतं पीयते,
कौमारे गुरुकार्यचिन्तनपरेणोपेक्ष्यते स्वं सुखम्।
गार्हस्थ्ये स्वकुटुम्बपोषणपरः पित्रोः पदं सेवते,
सर्वत्रापि कृतार्थतामधुरितं तज्जीवनं जीवनम्॥ ३॥

नो कुत्रापि कदापि दुष्टसदने भुक्तं विषं भोजनं,
नो येनातिकठोरघोरसमये त्यक्तञ्च चेतो बलम्।
येनेदं सकलं परार्थकरणे संयापितं जीवितं
लब्धं तेन सुधामयं नवफलं तज्जीवनं जीवनम्॥ ४॥

यस्मिन् जन्मनि कृष्णनाम रटितं तज्जीवनं जीवनं
यस्मिन् ज़न्मनि शास्त्रचिन्तनमभूत्तज्जीनं जीवनम्।
यस्मिन् जन्मनि राष्ट्रचिन्तनरतिस्तज्जीवनं जीवनं,
यस्मिन् जन्मनि चात्मचिन्तनमतिस्तज्जीवनं जीवनम्।। ५।।

## १२. ग्रीष्मकाले मध्याह्नवर्णनम्

तपति रविरयं मयूखजालैः क्षितितलमुज्ज्वलमण्डलो नभोऽग्रे।
अपगतजनचार एष पन्थाः प्रसरति नैव खगो न नादलेशः।।

## १३. श्रान्ततनुनताङ्गीवृद्धावर्णनम्

निर्दन्तवक्त्रा पलिताल्पकेशी दण्डावलम्बा धृतशुक्लवस्त्रा।
रुद्राक्षमालाञ्चितशुष्ककण्ठी स्खलद्गतिश्श्रान्ततनुर्नताङ्गी।। १ ।।

## १४. क्लेशदात्री हि पित्रे

## कन्यायाः गुणगानं श्रुत्वा पितुः क्लेशः

जाता मुग्धा तव तु दुहिता दर्शनीया मनोज्ञा
रूपेणाद्य प्रथितमदनप्रयेसीं धिक्करोति।
श्रुत्वा वाक्यं वरविचयने कष्टसिन्धौ पिता हा
कन्या प्रायः भवति सततं क्लेशदात्री हि पित्रे।। १ ।।

## १५. वर्षन्तु धाराधराः

## राष्ट्रोन्नतिचिन्तनम्

राष्ट्राध्याक्षमहोदयोऽवतु चिरं न्यायेन सर्वाः प्रजाः
गावो भूसुरमण्डली च सुखिनः सर्वे जनाः सर्वदा।
नद्यः स्यू रसपूरिता विटपिनो नूनं फलैः संभृताः
अन्नाद्यैः परिपूरिता च धरणी वर्षन्तु धाराधराः।। १ ।।

## १६. चापूपुषद् वैदुषीम्

## गुरोः पाण्डित्यम्

न्यायार्थानधिजग्मुषी विविदुषी बौद्धस्य मर्माखिलं
मीमांसादिजगाहुषी बुधगुरोर्भाट्टे पदं दाशुषी।
तर्कोन्मर्दमुपेयुषी जगृहिषी वैशेषिकं साहुषी
नूनं तस्य तु शेमुषी बहुमुखी चापूपुषद् वैदुषीम्।। १ ।।

## कुकाव्यप्रशंसा

कर्णौ निष्करुणं दहन्ति कवयो नूनं त्विदानीन्तनाः
पीत्वा सर्वरसान् कटून् विदधते गर्जन्ति तारस्वरैः।
क्रन्दन्त्येव पदानि वा कवयतां कुर्वन्तु लज्जा यदि
नालङ्कारयुतं क्वचित्क्वचिदपि ह्यौचित्य चिन्ताऽथवा।। १ ।।

## विरहिणी नायिका

न चरीकरीति निजदैहिकीं क्रियां कबरीच्छटां नहि वरीभरीति सा।
हरिणीव हन्त विजरीहरीति नो मधुरं वचो न विवरीवरीति च।। १ ।।

(न चरीकरीति पुनः पुनः न करोति। न वरीभरति (?) पुनः पुनः न विभर्ति। न विजरीहरीति – पुनः पुनः न क्रीडति। न विवरीवरीति – पुनः पुनः न भृशं विवृणोत्ति।)

केशवदत्तकीलालमतिहीनजनोदयम्।
भोग–योग–कर श्रीमत् पापरतन्च पातीदम्।। ८।।

(केशवाय प्रदत्तं कीलालं जलं अतिहीनजनोदयं भवति। इदं भोगयोगकरं श्रीयुतं पापरतं पाति)

## श्रीरामः भरतं प्रशंसति

सीतासीन्मम पार्श्वमेव सततं, श्रीलक्ष्मणो दासवत्,
नैके साधुजनाश्च मे सहृदयास्त्रातुं तपोभिर्निजैः।
वृक्षाः पुण्यतपोधनाश्च विहगा वन्याश्च नो रक्षकाः,
धन्योऽयं भरतोऽस्ति शीर्णवदनो मत्तोऽपि कष्टव्रतः।। १।।

## श्रीभरतः रामं संस्मृत्य विलपति

सौख्यं ते मम कैकेयी हृतवती तातश्च राज्यं हठात्
चेतस्ते करुणानिधानदयिता श्रीजानकी चाहरत्
भ्राता लक्ष्मण एव मार्गमखिलं त्वत्तो गृहीत्वा सुखी
याचेऽहं भरतः प्रदेहि भगवन् त्वत्पादुके हे प्रभोः!।। १।।

## पादुकां गृहीत्वा भरतः रोदति

मार्गे त्वदीयचरणौ भुवि कोमलौ तौ, शक्ते निधातुमतिकण्टककानने ये।
ते पादुके खलु हठाद्धृतवाञ्छठोऽहं धिङ् मां प्रभो! मतिविहीनविवेकशून्यम्।। २।।

## श्रीरामस्य कैकेयीं प्रति आदरवचनं श्रुत्वा श्रीभरतः रामं ब्रूते

यदर्थं तातो मे निरतिशयदुःखेन विवशः
तनूजं श्रीरामं निशिचरयुतं घोरविपिनम्।
स्वकीयान् प्राणान् यः सपदि मुमोचातिविरहात्
कथं सा कैकेयी जगति महिला हन्त भविता।। ३।।

## रामस्य वनवासविषये शङ्का

चतुर्दश समा रामश्चक्रवर्तिसुतोत्तमः।
कथं काननसञ्चारी बभूव क्लेशभाजनम्।। ४।।

## प्रातःकाले श्रीरामचन्द्रं प्रति मुनिः

कौशल्यानयनारविन्दसुखद! श्रीजानकीवल्लभ!
सूर्यः प्रादुरभूद्भवत्कुलगुरुः पूर्वाञ्चले दिक्स्थे।
डीयन्ते पतगाः सहर्षमभितः श्रुत्वा च शब्दं गवां,
हे हे देव! कृपानिधान! कृपयोतिष्ठ प्रभातेऽधुना।। १४।।

## शरीरम्

कथं चर्माच्छन्नं कफपवनपित्तैश्च वलितं,
शरीरं व्याधीनां गृहमिति सुधीभिः प्रकथितम्।
जराजन्मादीनां सकलभयमूलं मलयुतं,
कविर्ब्रूते साक्षात्सरससदनं सौख्यभवनम्।। १।।

## आत्मा

रोगो न भोगो न जरास्ति यस्य ह्रासो न वा भवति वृद्धिरथापि तस्य।
रागादिदोषवशतोऽस्ति शरीरबन्धः आत्मा सदैव भवतीह विमुक्त एव।। २।।

आत्मा सदैव विमलोऽस्ति शशाङ्कतुल्यो ज्ञेयो ह्ययं नहि कदापि विनाशशीलः।
जानीहि दूषितमिदं क्षणिकं शरीरं योगस्तयोर्भवति कर्मविपाकजन्यः।। ३।।

रोगादिपीडितमतीव कृशं विलोक्य भो मूढ! रोदिषि वृथैव विचारहीन!
नाशेऽपि कायविभवस्य न चात्मनाशः तेजोमयोऽस्ति परितः परिपूर्ण एव।। ४।।

## वाल्मीकि प्रशस्तिः

पापं ते कुलबान्धवा न जगृहुः सौख्यांशभाजः सदा
ज्ञात्वेथं सहसा पपात तरसा पादे महर्षेर्यदा।
धन्योऽभूच्चिरकालमेव तपसा श्रीराममन्त्रं जपन्
वाल्मीकिः कविपुङ्गवो गुणमयो भक्तः स आद्यः कविः।। ५।।

माता मे सुखदा सदा सुहृदया देवी च दुर्गोपमा,
नानाक्लेशमवाप्य या न विमुखी संरक्षणात् नः प्रिया।
शीतर्त्तौ हृदयस्थितेन तपसा संपाल्य या यत्नतः
धन्या सा जननी परा भगवती स्वर्गेऽपि या दुर्लभा।। १।।

दत्वा या निजरक्तमेव हृदयात् सम्पोषयन्ती सदा
मूत्रामेध्यकफादिनिर्घृणमहो स्पृष्ट्वा च या सेविका।
यास्ते रक्षणतत्परा निजसुतान् संछाद्य वस्त्रेण च
नानायत्नपरा सदा हि जननी संलक्ष्यते रक्षिका।। २।।

भार्या स्वार्थं प्रतिदिनमहो लब्धुकामा सुखं या,
भ्राता पुत्राः निजहितकराः स्वार्थसिद्धिं यतन्ते।
तातो बन्धुर्निजजनगणो चार्थलाभाय सर्वे
धन्यैका या भवति जननी सर्वदा स्वार्थहीना।। ३।।

नो दुर्गा न च जानकी न च रमा नो वा शिवा शारदा
नो ब्रह्मा न हरो न वा मधुरिपुः नो वा दिनेशस्तथा।
नो वा मित्रकलत्रबान्धवजनश्चान्योऽपि कश्चित्प्रियः
माता मे जननी यथा प्रियतमा सर्वत्र संलक्ष्यते।। ४।।

दुर्गा रक्षति विश्वमेव सकलं लक्ष्मीः धनं यच्छति
ब्रह्मा सृष्टिकरो हरश्चहरणे श्रीशारदा ज्ञानदा।
नो वा कोऽपि महीतले मम–हितं चित्ते करोति क्वचित्
एका मे जननी दयार्द्रहृदया सर्वात्मना रक्षिका।। ५।।

दत्वा भोजन–पान–वस्त्रमखिलं सन्त्यज्य सौख्यं निजं
क्लेशं प्राप्य निरन्तरं कृतवती या पालनं सर्वथा।
आहारं नितरां प्रदाय सततं योपसनां कुर्वती
नित्यं कष्टव्रतोपवासनिरता संरक्षणे तत्परा।। ६।।

तातो में सरलः सदा भगवतः पूजार्चने संरतः
सत्याचारविचारशीलविबुधः पूजाजपादिप्रियः।
धर्मात्मा बहुवञ्चितो निजजनैः कापट्यपूर्णैश्छलैः
अल्पायुः सहसा गतः शिवपुरं सन्त्यज्य नो बालकान्।। ७।।

वज्राघातसमं विधेर्नियमितं दण्डं कठोरं भृशं
सोढ्वा या निजसन्ततेर्बहुविधां रक्षां प्रकर्त्तुं सदा।
दीना दुःख–परायणा हरिरता दुर्गार्चनं कुर्वती
सर्वं कष्टमहर्निशं विधिवशात् भुक्त्वा च नो रक्षिका।। ८।।

चात्वारो सुखदाश्च सन्ति सततं पुत्राः प्रियाः साम्प्रतं
कन्ये द्वे सुखभोगमाप्य वशगे यस्याश्च मातुर्ध्रुवम्।
नूनं षट् बहुदुःखकारणमहो पूर्वं गृहे भारवत्
ते सर्वे जननीकृपालववशात् जीवन्ति लोकादृताः।। ९।।

कुपुत्राः जायन्ते भवति जननी नैव कुटिला
वचः श्रुत्वा कष्टं सपदि सहते या करुणया।
कुपुत्राणां दोषान् गणयति न माता कथमपि
ध्रुवं धन्या मान्या भवति जननी कष्टशमनी।। १०।।

गृहे वस्त्रे विद्वन्नवसमशुभाशीःप्रवचने
समस्या पूर्तौ च प्रथितजननीस्तोत्रकलितम्।
विवेकग्रन्थेऽस्मिन् व्यवहृतिशतं नीतिवलित–
मुमानाथेनेदं व्यरचि कुतुकं श्लोकनिवहैः।।

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य–विद्यावाचस्पति डा उमारमणझाशर्मविरचितायां विवेकसहस्र्यां व्यवहारशतकं सम्पूर्णम्।

# विवेक–साहस्री

## १. अभिनन्दनशतकम्

१. श्रीमदनन्तलालठक्कुरपादानाम्
२. प. श्रीबदरीनाथशुक्लमहोदयानाम्
३. श्री श्री श्री भारतीतीर्थस्वामिपादानाम्
४. श्रीविश्वेशतीर्थश्रीपादानाम्
५. डा.वी.आर. शर्ममहोदयानाम्
६. श्रीवेङ्कटरामन्महोदयानाम्
७. श्रीरामप्रपन्नाचार्याणाम्
८. श्रीबालगङ्गाधरनाथस्वामिनाम्
९. डा. रामकरणशर्मणाम्
१०. प. श्री विद्यानाथओझावर्याणाम्
११. डा. राममूर्तिशर्मणाम्
१२. डा. परमानन्दशास्त्रिवर्याणाम्
१३. डा. मुरलीधरपाण्डेयमहोदयानाम्
१४. प. श्री विश्वनाथशर्ममहोदयानाम्
१५. डा. फुल्लेलरामचन्द्रुडुमहोदयानाम्
१६. डा. श्रीनारायणमिश्रमहोदयानाम्
१७. डा. महाप्रभुलालगोस्वामिवर्याणाम्
१८. प. वासुदेवइलियटमहाशयानाम्
१९. डा. रमाकान्तशुक्लमहोदयानाम्
२०. प्रो. कृष्णनुन्निकविरत्नानाम्

# अभिनन्दनम्

## श्रीमदनन्तलालठक्कुरपादानाम्

प्रातः स्मरणीयानां विविधविद्याविद्योतितान्तःकरणानां नैयायिकमूर्धन्यानां धर्माचारनिष्ठानां नैकविधग्रन्थ–सम्पादकानां काशीप्रसादजयसबालशोधसंस्थायाः निदेशकचराणां राष्ट्रपतिसम्मानमण्डितानां गुरुचरणानां श्रीमतामनन्तलालठक्कुरपादानामभिनन्दनम्।।

शिष्याणां हितचिन्तको बुधवरो विद्वत्प्रियो धार्मिकः
विद्यावान् विनयी नितान्तसरलो विज्ञो महापण्डितः।
लोकाचार विचारसारकुशलो मान्यः सुधीः मे गुरुः
पूज्यः श्री मदनन्तलालचरणः सर्वत्र जेगीयते।।१।।

विज्ञानां धुरिकीर्तनीययशसामग्रेसरः सर्वदा
शास्त्रे दत्तमनास्सदा विजयते कृष्णेऽतिभक्तिं वहन्।
गैर्वाण्याः समुपासको मम गुरुर्विज्ञेषु बद्धादरः
सन्मान्यो जगतीतलेऽस्ति मतिमाञ्छ्रीठक्कुरो राजते।। २।।

तर्के यस्य गतिस्सदाऽप्रतिहता शास्त्रेषु वाचस्पति–
राद्योपान्तमधीत्य चिन्तनरतः पूर्णं महाभारतम्।
बौद्धे जैननये कणादरचिते चान्येषु शास्त्रेषु च
मूर्धन्यो विबुधः प्रसन्नवदनो जीयाद्गुरुः "ठक्कुरः"।। ३।।

ग्रन्थान् नैकविधान् विचार्य मतिमान् क्लिष्टान् सुसम्पाद्य यः
व्याख्या–ग्रन्थ–निबन्ध–लेखनपटुर्मान्यो विपश्चिद्वरः।
ग्रन्थ–ग्रन्थि–निवारणेऽतिकुशलः सर्वत्र सम्मानितः
जीव्याद्वर्षशतं कुटुम्बसहितो मान्यो गुरुः शङ्करः।। ४।।

शिष्या यस्य सहस्रशोऽपि सुलभाः प्रान्ते बिहारेऽधुना
बङ्गे चोत्कलवासिनश्च बहवो नेपालदेशे तथा।
शास्त्रज्ञाः विबुधाः प्रकाण्डविदुषो गायन्ति गीतं गुरोः
सोऽयं श्रीमदनन्तलालचरणः विद्वत्सु मुख्योऽधुना।। ५।

सदा पूज्यो लोके परमकुशलः शास्त्रमथने
धुरीणो विज्ञानां हरिचरणचिन्तासु रसिकः।
पदे न्याये सांख्ये सुगतमुनिशास्त्रे पटुतमः
प्रसन्नः पूज्यो नोऽवतु चिरमनन्तो गुरुवरः।। ६।।

श्रीमदनन्तलालाय पूज्याय गुरवे मुदा।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।। ७।।

# [१]अभिनन्दनम्

पं. बद्रीनाथशुक्लमहोदयानाम्

विविधविद्योतितान्तःकरणानां तार्किकचूडामणीनां सम्पूर्णानन्द संस्कृतविश्वविद्यालयस्य भूतपूर्व कुलपति—महोदयानां सर्वतन्त्र—स्वतन्त्राणां राष्ट्रपतिपुरस्कारभाजां श्रीमतां बदरीनाथशुक्लमहोदयानां स्वागताभिनन्दनम्।

तर्के यस्य गतिः सदाऽप्रतिहता शास्त्रेषु वाचस्पति
र्लब्धो येन हि बालकृष्णसदृशो भाग्येन दीक्षागुरुः।
शास्त्रे दत्तमनास्सदा विजयते स्वाचारबद्धादरो
विद्यापीठमुपागतोऽस्ति बदरीनाथाख्यशुक्लः सुधीः।। १।।

गैर्वाण्याः समुपासको बुधवरो विज्ञेषु चूडामणिः
सौम्यः सत्यरुचिः सतां कुलमणिर्ज्ञानाग्रगण्यो गुरुः।
विद्यावान् विनयी नितान्तचतुरः ख्यातो जगन्मण्डले
सौभाग्येन समागतोऽस्ति बदरीनाथः स शुक्लो बुधः।। २।।

सत्ये धर्मसमः सदा क्षितितले मान्यो विवेकी सुधीः
गाम्भीर्ये जलधिः क्षमाऽवनिसमा यस्यास्ति नैसर्गिकी।
व्याख्याग्रन्थनिबन्धनेऽतिनिपुणो वक्ता विपश्चिद्वरः
पूज्यः श्री बदरीसुधीर्विजयते ज्ञाने च वादे तथा।। ३।।

---

[१]अधुना श्रद्धाञ्जलिः समर्प्यते।

विद्यावाक्पतये! नमोऽस्तु भवते तर्कस्य वारांनिधे!
नित्यं संस्कृतसाहितीमधुरसश्रोतस्विनी भासते।
विद्वत्पूज्य! महामते! शुभदिने त्वां प्राप्य मोदान्विता:
धन्या: स्मस्तव दर्शनेन सुदिनं मन्यामहे साम्प्रतम्।। ४।।

येनासादितगौरवेण शतश: शिष्या: प्रशिष्या: कृता:
लोके संस्कृतवाङ्मयस्य विविधा: सेवा: सपर्याश्चिता:।
शुक्ल: श्रीबदरीसुधी: कुलपति: सौभाग्यसम्बर्द्धक:
विद्यापीठमुपागतो बुधवर: स्तुत्यश्च वन्द्य: सदा।। ५।।

नमस्ते बदरीनाथ! पूज्याय गुणमूर्त्तये।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्माणा।।

# अभिनन्दनम्

## श्रीश्रीश्री भारतीतीर्थस्वामिपादानाम्

श्रीमत्परमहंसपरिव्राजकाचार्यवर्याणां पदवाक्यप्रमाणपारावारपारीणानां यमनियमाद्यष्टा—ङ्गयोगानुष्ठाननिष्ठानां वैदिकमार्गप्रवर्तकानां सर्वतन्त्र—स्वतन्त्राणां ऋष्यशृंगपुरस्थ शारदापीठा—धीश्वराणां जगद्गुरूणां शङ्कराचार्यपादानां श्री श्री श्री भारतीतीर्थस्वामिपादानामभिनन्दनम्।।

मीमांसादिगभीरशास्त्रनिवहे वाचस्पतिर्यो बुधः
दैव्यां वाचि रतः प्रसन्नवदनो मान्यो महापण्डितः।
सौम्यः सत्यरुचिः सतां कुलमणिर्विज्ञेषु बद्धादरः
वन्द्यः श्रीयुतभारतीबुधवरः सर्वत्र जेगीयते।। १ ।।

दीनानां हितचिन्तने कृतमतिर्यो लोकवन्द्यः सदा
विद्यावान् विनयी नितान्तसरलः ख्यातो जगन्मण्डले।
ग्रन्थग्रन्थिनिवारणेऽतिकुशलो विद्वत्प्रियो धार्मिकः
श्री श्री श्री युत भारतीयतिवरो राराजते साम्प्रतम्।। २ ।।

वेदान्तेषु विचारणे कृतमतिः शास्त्रेषु मग्नः सदा
देशे संस्कृतिरक्षणाय परितश्चित्तैकतानः सदा
विज्ञानां धुरिकीर्त्तनीययशसामग्रेसरो यः सुधीः
मान्यः सोऽद्य महीतले गुरुवरः "श्रीभारती" शङ्करः।। ३ ।।

धर्मार्थे सुरुचिः सदैव शुचिता मान्ये जने नम्रता
सारल्यं समता प्रमाणपरता सेवा सदाचारता।
दीने द्रव्यपतौ च पूर्णसमता नित्यं गुणग्राहिता
तीर्थं श्रीयुतभारतीबुधवरं चुम्बन्ति सर्वे गुणाः।। ४ ।।

गांभीर्येण युता श्रमेण निचिता कर्त्तव्यनिष्ठावती

संस्कारैः रसिता सदैव सरला नम्रा गुणग्राहिणी।
नैर्मल्यादिगुणाञ्चिता मधुमती व्यक्तित्वविद्योतिनी
धन्या जीवनपद्धतिः शुचितरा श्रीभारतीसद्गुरोः।। ५।।

श्री श्रीयुक्तं परमविबुधं भारतीतीर्थवर्यं
सद्भक्तानां विमलमनसां मानसे संवसन्तम्।
मायातीतं परमसरलं सर्वदा सुप्रसन्नं
शास्त्राब्धीनां प्रमथनपटुं विश्ववन्द्यं नतोऽहम्।। ६।।

भारतीतीर्थवर्याय स्वामिने ज्ञानरूपिणे।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।। ७।।

# अभिनन्दनम्

## श्रीश्री विश्वेशतीर्थपादानाम्

विविधविद्याविद्योतितान्तःकरणानां सदाचारनिष्ठानां स्वगुरुकृपालब्धविभूतीनां विद्वज्जनगोष्ठीप्रकाशमानानां वेदान्तज्ञानविजृम्भितान्तःकरणानां तार्किकप्रवराणां दीनोद्धारपरायणानां वैष्णवाग्र गण्यानां माध्वसम्प्रदायालङ्कारभूतानां पेजावरमठा—धीशानां श्रीविश्वेशतीर्थश्रीपादानां हार्दिकमभिनन्दम्।।

दैव्यां वाचि रतः प्रसन्नवदनः कायेन कान्तिं वहन्
धर्माचारपरायणो यतिवरो ज्ञानाग्रगण्यः क्षितौ।
शिष्याणां हितचिन्तने कृतिमतिर्दक्षश्च शास्त्रे बुधः
जीयाद्वर्षशतं सुधीः गुरुवरो विश्वेशतीर्थो मुदा।। १ ।।

''विद्यामान्य'' गुरुश्च येन विदुषा लब्धश्च शिक्षागुरुः
बाल्ये येन कृतः श्रमश्च पठने वेदादिशास्त्रेष्वपि।
यो माध्वः खलु वैष्णवाग्रगणितो विद्वत्सु चर्चान्वितः,
सोऽयं दिव्यचरित्रचित्रितगुरुर्विश्वेशतीर्थः सुधीः।। २ ।।

तर्के यस्य गतिः सदाऽप्रतिहता शास्त्रेषु वाचस्पतिः
साहित्येऽपि विचक्षणो मतिमतां श्रेष्ठश्च वन्द्यस्तथा
नानाशास्त्र विचारचिन्तनरतो वेदान्तविज्ञो बुधः
जीयाद्वर्षशतं प्रसन्नहृदयो विश्वेशतीर्थो गुरुः।। ३ ।।

वन्द्यो यो भुवि सादरं बुधवरो माध्वः सतामग्रणीः
ग्रन्थग्रन्थिनिवारणे कृतमतिः शिष्यार्थकल्पद्रुमः।
श्रीपेजावरमान्यतीर्थविबुधः ख्यातो जगन्मण्डले
जीयाद्वर्षशतं सुशिष्यवलितः विश्वेशतीर्थो गुरुः।। ४।।

शिष्या यस्य शताधिकाश्च सुलभाः प्रान्ते च कर्णाटके
चान्ध्रे केरलगुर्जरादिविषये प्राच्यां प्रतीच्यां बुधाः।
कीर्तिं यस्य गुरोः किरन्ति भुवने पेजावरस्वामिनः
सः श्री श्रीयुत पुण्यनामावलितो विश्वेशतीर्थो गुरुः।५॥

पेजावरमठाधीश! श्रीविश्वेश! नमोऽस्तु ते।
समर्थतेऽद्य वाक्पुष्पमुमारमणशर्मणा॥ ६॥

# अभिनन्दनम्

## डा. बी.आर. शर्ममहोदयानाम्

विविधविद्याविद्योतितान्तःकरणानां वेद–ब्राह्मण–कर्मकाण्डादिविचारकाणां भाषाशास्त्रनिपुणानां सर्वतन्त्र–स्वतन्त्राणां गुरुचरणानां डा.वि.आर. शर्ममहोदयानामभिनन्दनम्।

दैव्यां वाचि रतः प्रसन्नवदनो विज्ञेषु बद्धादरः
सौम्यः सत्यरुचिः सतां कुलमणिः कायेन दीप्तिं वहन्।
विद्यावान् विनयी नितान्तसरलः ख्यातो जगन्मण्डले
विद्वत्सेवितपादपद्मयुगलो वी.आर.शर्मा गुरुः।। १ ।।

वेदे यस्य गतिः सदाऽप्रतिहता शास्त्रेषु वाचस्पतिः
भाषाशास्त्रविचारणेऽतिनिपुणो लब्धप्रतिष्ठो महान्।
शास्त्रे दत्तमनाः सदा विजयते स्वाचारबद्धादरो
मान्यः श्रीगुरुपादपद्मयुगलो वी.आर.शर्मा सुधीः।। २ ।।

मो मुद्ये जनता करोति भवतां सम्मानमत्यादरात्
यज्जिह्वां मधुमत्तमामधिगता गीर्वाणगीर्देवता।
सत्ये धर्मसमः सदा क्षितितले मूर्तिर्विवेकस्य यः
सोऽयं दिव्यचरित्रवान् मम गुरु र्वि.आर.शर्मा बुधः।। ३ ।।

येनासादितगौरवेण शतशः शिष्याः प्रशिष्याः कृताः
लोके संस्कृतवाङ्मयस्य विविधाः सेवाः सपर्याः कृताः।
व्याख्या–ग्रन्थ–निबन्धलेखनपटुर्वक्ता विपश्चिद्वरः
तं पूज्यं गुरुवर्यमेव सुखदं भक्त्या नतोऽहं सदा।। ४ ।।

शिष्या यस्य शताधिकाश्च सुलभाः प्रान्ते बिहारेऽधुना
पाञ्चाले तिरुपत्तने च बहवो देशे विदेशे तथा।
नेपालेऽपि विराजमानसुधियो गायन्ति गीतं गुरोः

सोऽयं शास्त्रशिरोमणिर्विजयते मान्यो गुरुः सर्वदा।। ५।।

पूज्याय गुरुपादाय श्रीमद्वी.आर.शर्मणे

समर्प्यते ऽत्र वाक्पुष्पमुमारमणशर्मणा।। ६।।

# अभिनन्दनम्

## रामस्वामिवेंकटरामन्महोदयानाम्

महामहिमशालिनां दीनोद्धारपरायणानां देशोन्नति–चिन्तकानां परमादरणीयानां राष्ट्रपतिमहोदयानां श्रीमतां रामस्वामिवेङ्कटरामन्वर्याणामभिनन्दनम्।।

विद्यावैभवभूषितो बुधवरो विज्ञो गुणज्ञः क्षितौ

नानादेशविदेशसंगतिविधौ चातुर्यमासादयन्।

राष्ट्रस्यास्य विभूषणं गुणखनिर्भास्वत्प्रतापावलिः

श्रीमद्वेङ्कटरामवर्यविबुधो जीव्यात्सहर्षं चिरम्।। १।।

दीनानां हितचिन्तकः स्वकृतिभिः ख्यातो जगन्मण्डले

सोढ्वा क्लेशचयं न यो विचलितः सन्न्यायमार्गात्क्वचित्।

स्वामी वेङ्कटरामनामसुजनो राष्ट्रस्य सम्बर्द्धको

जीर्याद्वर्षशतं कुटुम्बसहितः श्रीजानकीवल्लभः।। २।।

दीनोद्धारपरायणः श्रमवतां मित्रं स्वदेशोन्नते–

र्नेता लोकहितार्थमेव यतते सर्वात्मना सर्वदा।

सत्याहिंसनयोरुपासनरतः श्रीगान्धिमार्गे दृढः

मान्यो राष्ट्रपतिः सदा विजयते श्रीरामस्वामी ध्रुवम्।। ३।।

निःस्वार्था राष्ट्रभक्तिर्जनहितकरणे यस्य कर्त्तव्यनिष्ठा

सत्ये पुण्येऽनुरक्तिः प्रबलतमरतिश्चिन्तने शास्त्रमार्गे।

शक्तिः सर्वत्र कार्ये नहि निजविषये स्वार्थभावः कदाचित्

यस्यैते मानवीयाः शुभगुणनिचयाः सोऽस्ति वन्द्यः सदैव।। ४।।

सत्यासत्यविवेकशीलमनुजः सत्कर्मनिष्ठः सदा
स्वातन्त्र्यस्य सुदीर्घकालिकमहासंघर्षयोद्धाग्रणीः।
सत्यत्यागविभावितो विनयवान् दान्तः सुशान्तः सुधीः
धैर्यौदार्यविवेकितादिगुणभृद् राष्ट्राधिपो राजते।। ५।।

वाचा कोमलया सुधामधुरया सम्बोधयन् स्वाः प्रजाः
लोकानामनुरञ्जने दृढ़मतिः कारुण्यरत्नाकरः।
सत्कीर्त्यावनिमण्डले गुणिगणे ख्यातिञ्च विस्तारयन्
रामस्वामिवरो विशिष्टपुरुषो रराजते भूतले।। ६।।

नानाशास्त्ररतः स्वदेशतिलकः शान्तिप्रियः कर्मठः
राष्ट्राध्यक्षवरो विशिष्टपुरुषः प्रज्ञाप्रदीपो महान्।
राष्ट्रोद्धारपरायणो मतिमतां श्रेष्ठः सदा वन्दितः
जीयाद्वेङ्कटरामपुत्ररमणः राष्ट्राधिपः सर्वदा।। ७।।

राष्ट्राध्यक्षो वरिष्ठो सुसरलहृदयो ज्ञानिनामग्रगण्यः
सत्याहिंसादिधर्मे दृढ़तरमतिमान् चारुचर्याविनम्रः।
सन्मान्यो धर्मनिष्ठः विविधगुणयुतो राष्ट्रभक्तो विधिज्ञः
श्रीरामस्वामिवर्यो जयतु भुवि सदा राष्ट्रनेता प्रसन्नः।। ८।।

श्रीमन्! राष्ट्रपते! धीमन्! विज्ञाय विबुधाय ते।
समर्प्यते हृदा पुष्पमुमारमणशर्मणा।।

# अभिनन्दनम्

## जगद्गुरुरामप्रपन्नाचार्याणाम्

श्री रामानन्दसम्प्रदायाचार्याणां वेदान्तकेसरिणां न्यायमार्तण्डानां सनातनधर्म प्रचारकाणां संस्कृतसम्पोषकानां सदाचारनिष्ठानां योगिराजजगद्गुरुरामप्रपन्नाचार्यमहोदयानामभिनन्दनम्।।

रामे भक्तियुतः प्रसन्नवदनः कायेन कान्तिं वहन्
धर्मात्मा मतिमान् सतां कुलमणिः स्वाचारबद्धादरः।
विद्यावान् विनयी विवेकवलितः ख्यातो जगन्मण्डले
जीयाद्वर्षशतं सुशिष्यसहितो रामप्रपन्नो यतिः।। १ ।।

दीनानामुपकारको हितकरो दानादिकार्यैः सदा
शिष्याणां हितसाधको गुणनिधिर्ज्ञानाग्रगण्येश्वरः।
धर्मार्थं स्वसुखं विहाय नितरां सत्कार्यनिष्ठो यतिः
योगी ध्यानरतो जगद्गुरुवरः रामप्रपन्नो बुधः।। २ ।।

योगीन्द्रो यतिनायको रघुवरध्याने रतः सर्वदा
नानाशास्त्रविचारको बुधवरो वेदान्तविज्ञः सुधीः।
मोक्षार्थं विजहौ सुखञ्च मतिमान् ''विश्वम्भरस्यात्मजः''
जीयाच्छ्रीयुतयोगिराजचरणो रामप्रपन्नश्चिरम्।। ३ ।।

रामप्रसादो जनिनाम यस्य रामप्रपन्नो धुरिकीर्त्तनीयः।
श्रीयोगिराजो यतिराजवर्यः जीयात्प्रसन्नो भुवि हर्षपूर्णः।। ४।।

रामेश्वरे यस्य विशेषभक्ती– रामेश्वरो यस्य विशिष्टशिष्यः
वाराणसी यस्य सुजन्मभूमिः जीयाच्चिरं रामप्रपन्नयोगी।। ५।।

न्याये च नव्ये जगदीशटीकां वेदस्य भाष्यं सुगमञ्च हिन्द्याम्।
सिद्धान्तदीपं किरणावलीञ्च चक्रे च योगी विविधाः कृतीश्च।। ६ ।।

दयायुक्तो योगी परमसरलो दानकुशलः
पिता साक्षाद्देवो द्विजवरबुधो यस्य विदुषः।
गुलावाख्या देवी शिवपदरता यस्य जननी
सदा पूज्यः सोऽयं यतिवरगुरू "रामशरणः"।। ७।।

श्री हनुमदाचार्यकृपावशाद्यः रामेश्वरानन्दबुधस्य पूज्याः।
श्रीरघुवराचार्यवरस्य शिष्यः विश्वम्भरस्यात्मज एव सोऽयम्।। ८।।

रामानन्दनयप्रचारणरतो वेदान्तविज्ञो बुधः
शास्त्राणां सुविचारको यतिवरो मान्यः सदा धार्मिकः।
योगीन्द्रो यतिभूषणं द्विजवरो सत्कर्मनिष्ठो महान्
धर्मे दत्तमनास्सदा विजयते रामप्रपन्नो गुरुः।। ९।।

स्वार्थं नास्ति कदापि यस्य हृदये रागादिभावः क्वचित्
नो वा द्वेषकणोऽपि यस्य मनसि, प्राणाः परार्थं कृते।
रामानन्दपदारविन्दमधुपो रामेऽतिभक्तिं वहन्
जीयात्सत्करुणो महर्षिहृदयो रामप्रपन्नो यतिः।। १०।।

विद्याभूतिगुणैर्यशोभिरमलैः संशोभते सर्वदा
विद्वन्मानससारशालिमधुपो वाग्मीव वागीश्वरः।
प्रोद्यद्गर्वसमस्तशास्त्रवलयं सम्मीलयन् तेजसा
रामानन्दसहोदरो यतिवरः पायाच्च शिष्यान् सदा।। ११।।

दीनानां कुशलं सदैव कुरुते लोकप्रियो धार्मिकः
सत्यासत्यविवेकशीलनपरो दाने च कर्णोपमः।
रामानन्दविचारसारमखिलं ब्रूते जनानां हितं
विद्याभ्यासवशादसौ बुधवरो सर्वत्र जेगीयते।। १२।।

काश्यां पुण्यमसौ सदा प्रकुरुते स्नानञ्च गङ्गाजलैः
साधूनां रुचिभोजनादिवचनैरातिथ्यमासादयन्।

शिष्याणां हितकार्यमेव सततं चित्ते बुधो धारयन्
पूज्यः श्रीचरणो यतिर्विजयते रामप्रपन्नो मुदा।।१३।।

तत्त्वत्रयं योगविचारशास्त्रं
सन्दर्भरूपा विविधाश्च ग्रन्थाः।
''अध्यास खण्डश्च'' चिदात्मदीपः
कृता विचित्राः खलु योगिराजैः।।१४।।

रामासु चित्तं रमते न यस्य
रामेऽति भक्तिं कुरुते सदैव।
रामेश्वरानन्दवरस्य पूज्यो
गुरुः प्रसन्नो यतिराजवर्यः।।१५।।

तर्के पक्षधरः प्रकाण्डविबुधः योगे च वाचस्पतिः
सांख्ये यः कपिलः सदा क्षितितले, मीमांसको मण्डनः।
साक्षाद्व्यासवदेव योऽस्ति भुवने वेदान्तविज्ञः सदा
पायान्नः स गुरुः सुशिष्यविबुधान् योगी महात्मा सुधीः।।१६।।

रामप्रपन्नवर्याय विज्ञाय विबुधाय ते।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।१७।।

## अभिनन्दनम्

श्री बालगङ्गाधरनाथस्वामिनाम्

विविधविद्याविद्योतितान्तःकरणानां दीनोद्धार–तत्पराणां जातिधर्मादिपक्षपातरहितानां शिष्योपकारनिरतानां शरणागतवत्सलानां चिकित्सालयाभियान्त्रिकादिविभिन्नसंस्था संस्थापकानां परमोदारहृदयाणां दानादिधर्मरतानां परम–पूज्यानां श्रीगङ्गाध रपादपद्मनिरतानां श्री श्री श्री बालगङ्गाधरनाथस्वामिपादानामभिनन्दनम्।

दीनानां हितचिन्तने कृतमतिर्दानैकनिष्ठः सदा
तेजस्वी मतिमान् विशिष्टपुरुषः कायेन दीप्तो भृशम्।
प्रज्ञावान् विनयी नितान्त सरलः ख्यातो जगन्मण्डले
जीयाद्वर्षशतं प्रसन्न हृदयः श्रीबालगङ्गाधरः।। १ ।।

योगीन्द्रो यशसादिचुञ्चनगिरौ राराजते साम्प्रतम्
शिष्यैः प्राणसमैः सदा परिवृतो यो लोकवन्द्यो गुरुः।
वेदान्तादिविचारचिन्तनरतो विज्ञेषु बद्धादरः
श्रीगङ्गाधरपादपूजनरतः श्रीबालगङगाधरः।। २ ।।

दीनानाथसमः सदा क्षितितले यो दुर्गताः योषितः
वस्त्रान्नैः परिपोष्य सन्ततमहो रक्षापरो धार्मिकः।
त्यक्ता दीनमुखीः परिच्युतगतानारीश्च संरक्ष्य यः
सम्पूज्योऽस्ति धुरन्धरो बुधवरः श्रीबालगङ्गाधरः।। ३ ।।

धर्मार्थे सुरुचिः शुचिश्च सततं काये च नैसर्गिकी
यस्यास्ते सकलं परोपकरणे सार्थं सदा जीवनम्।
नानाकार्यविचारशीलपुरुषो ज्ञानाग्रगण्यो बुधः–
मान्यः सोऽस्ति महीतले गुरुवरः श्रीबालगङ्गाधरः।। ५ ।।

शिष्याः यस्य शताधिकाश्च सुलभा राज्ये च कर्णाटके
चान्ध्रे मद्रपुरे च केरलधरा देशे विदेशेस्वपि
धर्माचारविचारशीलकुशला गायन्ति गीतं गुरोः
सः श्री श्रीयुत दिव्यरत्नविबुधः श्रीबालगङ्गाधरः।। ५।।

भक्तिर्यस्य सदास्ति भैरवपदे गङ्गाधरे शङ्करे
शक्तिर्यस्य सदास्ति मन्त्रवलिता गुह्याति गुह्यापरा।।
रक्तिर्यस्य सदैव चिन्तनविधौ विज्ञस्य धर्मे भृशं
सोऽयं दिव्यचरित्रचित्रितबुधः श्रीबालगङ्गाधरः।। ६।।

देशे संस्कृतिरक्षणाय सततं यस्य प्रयत्नः सदा
दैव्यां वाचि रतः सदैव गुरुते यः संस्कृतस्योन्नतिम्।
लोकानामनुरञ्जको बुधवरो मान्यः सतामग्रणीः
श्रीगङ्गाधरपादपद्मनिरतः श्रीबालगङ्गाधरः।। ७।।

विज्ञाय ज्ञानरूपाय गङ्गाधर नमोऽस्तुते।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

### डॉ. रामकरणशर्मणाम्

विविधशास्त्रमर्मज्ञानां सर्वतन्त्रस्वतन्त्राणां विचाराचारनीतिनिपुणानां कामेश्वरसिंहदरभंगा–संस्कृतविश्वविद्यालयस्य सम्पूर्णानन्द संस्कृत विश्व–विद्यालयस्य च कुलपतिचराणां राष्ट्रिय संस्कृत–संस्थानस्य निदेशकचराणां भारतसर्वकारस्य संस्कृतानुशासकानां राष्ट्रपतिसम्मानभाजां परमादरणीयानां डा. रामकरणशर्मवर्याणामभिनन्दनम्।

विज्ञानां धुरिकीर्त्तनीययशसामग्रेसरो यः सुधीः
नानाशास्त्रयथार्थचिन्तनरतो विज्ञेषु बद्धादरः।
नानाग्रन्थ–निबन्ध–लेखनपटुर्वक्ता विपश्चिद्वरः
सोऽयं श्रीयुतपूज्यरामकरणो लोकेषु वन्द्यश्चिरम्।। १।।

दैव्यां वाचि रतः प्रसन्नवदनः कायेन दीप्तिं वहन्,
विद्यावान् विनयी स्वकर्मनिरतः ख्यातो जगन्मण्डले।
सर्वत्रैव समादृतो बुधवरो मान्यः सतामग्रणीः
सोऽयं दिव्यचरित्रवान् कुलपतिः वन्द्योऽस्ति भूमण्डले।। २।।

धर्मे चातिरुचिं सदैव कुरुते चार्थे मुहुश्चिन्तकः
कामे काम्यरुचिं विधाय विबुधो मोक्षे सदात्यादरम्।
पौरुष्यं च चतुर्विधं हितकरं सम्पाद्य यः पण्डितो
मान्यः शास्त्रपतिः स रामकरणो सौख्येन जीयाच्चिरम्।। ३।।

येनाकारि सतां सदैव सुधिया सर्वत्र चात्यादरः
शिष्याः यस्य शताधिकाश्च भुवने शास्त्रेषु पारङ्गताः।
सौम्यः सत्यरुचिः विशिष्टपुरुषो राष्ट्रस्य रत्नं ध्रुवम्
मान्यः श्रीयुत विज्ञरामकरणो राराजते साम्प्रतम्।। ४।।

राष्ट्राध्यक्षवरेण पूजितबुधः शास्त्रेषु चिन्तारतः
गैर्वाण्याञ्च विचारणे कृतमतिर्देशे विदेशेष्वपि।
साहित्ये च विचारवान् कविवरो वाक्यार्थविज्ञोबुधः
जीव्याच्छ्रीयुत पूज्यरामकरणो मान्यः सहर्षं चिरम्।। ५।।

निदेशकाय विज्ञाय शर्मणे ज्ञानमूर्तये।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

पं. विद्यानाथओझामहोदयानाम्

विविधविद्याविद्योतितान्तः करणानां साहित्यज्योतिष—धर्मशास्त्र—तन्त्रादिशास्त्रप्रवीणानां सर्वतन्त्रस्वतन्त्राणां विचाराचारपूतानां राजगुरूणां पण्डितप्रकाण्डानां श्रीमतां विद्यानाथ ओझा—महोदयानां हार्दिकमभिनन्दनम्।

दैव्यां वाचि रतः प्रसन्न वदनः कायेन शोभां वहन्
विद्यावान् विनयी नितान्तसरलः ख्यातो जगन्मण्डले।
सौम्यः सत्यरुचिः सतां कुलमणी राज्ञो गुरुर्मैथिलः
विद्यानाथसुधीः सदा विजयते सर्वत्र सम्मानितः।। १।।

येनासादितगौरवेण बहुशः शिष्याः प्रशिष्याः कृताः
लोके संस्कृतवाङ्मयस्य बहुधा सेवाः सपर्याः कृताः।
व्याख्याग्रन्थनिबन्धलेखनपटुर्वक्ता विपश्चिद्वरः
पूज्यो राजगुरुः प्रफुल्लवदनो जीयाच्चिरं मैथिलः।। २।।

वेदान्तादिविचारणेऽतिनिपुणः शास्त्रेषु वाचस्पतिः
साहित्येऽपि कृतश्रमो बुधवरः कृष्णेऽतिभक्तिं वहन्।
शक्तिर्मन्त्रबलेन यस्य सफला देहे सदा राजते
मान्यः श्रीयुतराजपण्डितवरो जीयात्सहर्षं चिरम्।।

विद्यावाक्पतये नमोऽस्तु भवते शास्त्रेषु भो पण्डित!
मूर्धन्यो विबुधेषु तन्त्ररसिको धैर्यस्य यो भूषणम्।
सत्ये धर्मसमस्सदा क्षितितले मूर्त्तिर्विवेकस्य यो
विद्यानाथकविः प्रसन्नहृदयो राराजते साम्प्रतम्।।४।।

विद्यानाथः परमनिपुणो लोकमान्योऽतिधन्यः
भूत्वा मुख्यो नरपतिसभागौरवं शास्त्रवेत्ता।
राजस्थाने लसति परमोदारदानी गुणाढ्यः
कीर्त्या योऽसौ किरति भुवने ज्ञानपुञ्जं सहर्षम्।।५।।

विद्यानाथ नमस्तुभ्यं शास्त्रज्ञानपिपासवे।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

डॉ. राममूर्तिशर्मणाम्

विविधविद्याविद्योतितान्तःकरणानां विचाराचारनिष्ठानां वेदान्तारण्यकेशरिणां विविध विश्वविद्यालय–सम्मानभाजां राष्ट्रपतिसम्मानपुरस्कृतानां विद्यावाचस्पतीनां परमादरणीयानां श्रीमतां डा. राममूर्तिशर्मवर्याणामभिनन्दनम्।

मीमांसासु विचारणे कृतमतिः शास्त्रेषु वाचस्पतिः
अद्वैते निपुणः सदा विजयते स्वाचारबद्धादरः।
व्याख्या–भाष्य–निबन्धलेखनपटुर्वक्ता विपश्चिद्वरः
जीयाद्वर्षशतं कुटुम्बसहितः श्रीराममूर्तिः क्षितौ।।१।।

'माया' येन विचारिता बहुविधा वेदान्तदृष्ट्या मुहुः
अद्वैते कृतभूरिचिन्तनवता सम्मानभाजा सता।
जैनेऽलेखि ''विचित्र–चित्रित–महावीरो' हि तीर्थंकरः
मान्यः सोऽस्ति महीतले बुधवरः श्रीराममूर्तिर्ध्रुवम्।।२।।

विद्यावान् विनयी नितान्तसरलो मूर्त्तिर्विवेकस्य यः
मूर्धन्यो विबुधेषु शास्त्ररसिको नीतौ पटुः सत्प्रियः।
ख्यातश्शास्त्रशिरोमणिर्बुधवरो विज्ञो महापण्डितः
जीयाद्वर्षशतं प्रसन्नहृदयः श्रीराममूर्त्तिः सुधीः।। ३।।

ग्रन्था नैकविधा निबन्धसहिता व्याख्याश्च विद्वत्प्रियाः
राजन्ते ध्वनिशास्त्रसम्मतयुताः सद्भावतत्त्वान्विताः।
शिष्याः यस्य सहस्रशोऽपि भुवने गायन्ति गीतं गुरोः
सोऽयं दिव्यचरित्रचित्रितगुणः श्रीराममूर्तिर्बुधः।। ४।।

शास्त्रार्थे सुरुचिः शुचिश्च वचने कार्ये च काये तथा
यस्यास्ते सरला च वाङ्मधुमयी यो लोकपूज्यस्सदा।
आचारे सुविचारकोऽस्ति भुवने विद्वत्प्रियो धार्मिकः
"श्रीरामो" विबुधः सदा विजयते शास्त्रेषु वादे तथा।। ५।।

राष्ट्राध्यक्षवरेण योऽस्ति भुवने मान्यश्च सम्मानितः
व्याख्यानेन विभिन्नदेशविदुषां श्रेष्ठश्च यो धीमताम्।
संस्थानेषु पुरस्कृतो द्विजवरो ज्ञानाग्रगण्यो गुणी
जीयात्पण्डितमण्डलीकुलमणिः श्रीराममूर्तिश्चिरम्।। ६।।

पूज्याय शास्त्रविज्ञाय हृदा श्रीराममूर्तये।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

### डॉ. परमानन्दशास्त्रिवर्याणाम्

विविधशास्त्रमर्मज्ञानां विचाराचारनिष्ठानां संस्कृतसाहित्यारण्यपञ्चाननानां सौन्दर्य–शास्त्रविचक्षणानामलीगढ़–मुस्लिम विश्वविद्यालयीय– संस्कृत विभागाध्यक्षाणां प्रोफेसर डॉ. परमानन्दशास्त्रिमहोदयानां षष्ट्यब्द–पूर्त्यवसरे हार्दिकमभिनन्दनम्।

गैर्वाण्यां सुविचारको बुधवरः सौन्दर्यविज्ञः सुधीः
सौम्यः सत्यरुचिः सतां कुलमणिर्ज्ञानाग्रगण्यः क्षितौ।
विद्यावान् विनयी नितान्तसरलः ख्यातो जगन्मण्डले
जीव्याद्वर्षशतं प्रहृष्टपरमानन्दो जगद्वन्दितः।। १ ।।

सौन्दर्ये सुरुचिः शुचिश्च वचने काये भृशं कान्तिमान्
यस्यास्ते सरला च वाङ्मधुमयी यो लोकपूज्यः सदा।
व्याख्यालेख–निबन्ध–लेखनपटुर्वक्ता विपश्चिद्वरः
वन्द्यः सोऽस्ति महीतले नु परमानन्दाख्यशास्त्री वरः।। २ ।।

शिष्या यस्य शताधिकाश्च सुलभाः दिल्यां तथालीगढ़े
प्रौढ़ा नैकविधाः बुधाश्च सततं गायन्ति गीतं गुरोः।
तं पूज्यञ्च धुरन्धरं बुधवरं श्लाघ्यं परं धीधनम्
षष्ट्यब्देऽवतु देववृन्दनिवहः प्रीत्या प्रसन्नस्सदा।। ३ ।।

षष्ट्यब्दोऽस्तु सुखाय तस्य सुधियः सौभाग्यसम्बर्द्धकः
सत्कीर्तिं वितनोतु मङ्गलमयीमारोग्यमायुश्चिरम्।
सानन्दं सकुटुम्बमस्तु सदने माङ्गल्यमाजीवनं
श्रीपूज्यस्य गुरोः प्रशस्तपरमानन्दस्य सर्वं शुभम्।। ४ ।।

गुणज्ञो नीतिज्ञो विविधगुणयुक्तो बुधवरः
विभागाध्यक्षोऽसौ जयतु परमानन्दविबुधः।
सुशास्त्रे सौन्दर्ये सपदि रमते यस्य हृदयं
सदानन्दोऽमन्दो भवतु परमानन्दसुमनाः।। ५ ।।

जीव्याद्वर्षशतं सुखेन परमानन्दो बुधाग्रेसर:
जीव्याद्वर्षशतं प्रफुल्लपरमानन्दो भृशं कान्तिमान्।
जीयाद्वर्षशतं स्वतन्त्रचिन्तनरतो मान्यो महापण्डित:
श्रीशम्भो: कृपया सदैव परमानन्दोऽस्तु हृष्ट: सुधी:।। ६।।

सौन्दर्यशास्त्रविज्ञाय परमानन्दशास्त्रिणे।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

डॉ. मुरलीधरपाण्डेयमहोदयानाम्

विविधशास्त्रमर्मज्ञानां पदवाक्यप्रमाणपारावारीणधुरीणानां वेदान्तसांख्ययोगादिशास्त्र–निपुणानां पण्डितराजानां विद्यावाचस्पतीनां श्रीरणवीर केन्द्रीय संस्कृतविद्यापीठस्य प्राचार्य–वर्याणां डा. मुरलीधरपाण्डेयमहोदयानां सौप्रस्थानिकममिभनन्दनम्।।

धर्मार्थे सुरुचिश्शुचिश्चवचने कार्ये च काये तथा
यस्यास्ते मधुरा च वाङ्मधुमयी यो लोकपूज्यस्सदा।
आचारे सुविचारकोऽतिनिपुणो विद्वत्प्रियो धार्मिक:
वन्द्योऽसौ मुरलीधरो बुधवरस्त्यक्त्वाद्य नो गच्छति।। १।।

वेदान्तादिविचारणेऽतिमतिमान् विप्रो महापण्डित:
साहित्येऽपि कृतश्रमो द्विजवरो रुदेऽतिभक्तिं वहन्।
शक्तिर्मन्त्रबलेन यस्य सफला देहे सदा राजते
शैव: श्रीमुरलीधरो विजयते प्राचार्यवर्यो बुध:।। २।।

धन्यं सारणमण्डलं समभवत्प्रान्ते बिहारे यदा
लेभे जन्म सतां कुले द्विजवरो बंशीधरस्याग्रज:।
ख्यातश्शास्त्रशिरोमणिर्गुरुवरो विज्ञो विपश्चिन्मुदा
जीयाद्वर्षशतं कुटुम्बसहितो मान्य: सहर्षं चिरम्।। ३।।

शिष्या यस्य शताधिकाश्च सुलभाः काश्यां तथान्ध्रे पुनः
काश्मीरे च हिमाचले च बहुशः प्रान्ते बिहारे तथा।
नेपाले च सुशिष्यसन्ततिशतं कीर्तिं गुरोः शंसते
सोऽयं श्री मुरलीधरो बुधवरो जीव्यात्प्रसन्नश्चिरम्।। ४।।

श्रीमन्! प्राप्य भवत्प्रकाशसरणिं नूनं कृतज्ञा वयम्
क्षन्तव्या यदि दुष्कृतं तव गुरो! केनापि किञ्चित्कृतम्।
किं कर्त्तव्यविमूढ़चित्तविकला याचामहे क्षम्यतां
विज्ञानां तु भवादृशां सुचरितं सर्वत्र जेगीयते।। ५।।

दीनानां हितचिन्तने कृतमतिर्नीतौ गुणज्ञोऽस्ति यः
मूर्धन्यो विबुधेषु शास्त्ररसिको धीराग्रगण्यः सदा।
विद्यावान् विनयी नितान्तसरलः पाण्डेयवर्यो बुधः
त्यक्त्वास्मान् खलु याति सम्प्रति सुधीः प्राचार्यवर्यो गुरुः।। ६।।

विद्यापीठस्य सर्वेषां प्रातिनिध्येन वो मया।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

### पं. विश्वनाथ शर्ममहोदयानाम्

परमादरणीयानां विविधशास्त्रमर्मज्ञानां पण्डितरत्नादिसम्मानोपाधिभूषितान गुरुवायुरकेन्द्रीय संस्कृत विद्यापीठस्य शास्त्रचूडामणि प्राध्यापकु—चराणां शिक्षणसंस्थासञ्चालकानां विविधग्रन्थप्रणेतृणां व्याकरण—साहित्य—वेदान्तादिशास्त्र—पण्डितानां ज्ञानवृद्धानां, तपोनिष्ठानां श्रीमतां विश्वनाथशर्ममहोदयानां शताभिषेकोत्सवावसरे सादरमभिनन्दनम्।।

वेदान्तादिविचारणे कृतमतिर्मान्यः सतामग्रणी—
नानाशास्त्रयथार्थचिन्तनरतः विज्ञेषु बद्धादरः।
अद्वैते निपुणः सदा विजयते विद्वत्प्रियो धार्मिकः
जीव्याद्वर्षशतं कुटुम्बसहितः "श्रीविश्वनाथो" मुदा।। १।।

प्राप्तो भाग्यवशाच्च येन विदुषा माण्डित्यराजो गुरुः
लब्धश्चापि हि रामवर्मसदृशः शास्त्रेषु दीक्षागुरुः।
सर्वज्ञानसमन्वितो बुधवरः श्रीविश्वनाथः प्रियः
धन्योऽसौ भुवि पूजितो विजयते सर्वत्र सम्मानितः।। २।।

माया येन विचारिता बहुविधा वेदान्तदृष्ट्या मुहुः
साक्षाद्ब्रह्म वदेव योऽस्ति भुवने सच्चित्स्वरूपे स्थितः।
विद्यावान् विनयी नितान्तसरलः मूर्तिर्विवेकस्य यः
मूर्धन्योऽस्ति महीतले स विबुधः श्रीविश्वनाथः सुधीः।। ३।।

ग्रन्थाः नैकविधा निबन्धसहिता व्याख्याश्च विद्वत्प्रियाः
राजन्ते बहुशास्त्रसम्मतयुताः यस्य क्षितौ दर्शने।
शिष्याः यस्य शताधिकाश्च भुवने गायन्ति गीतं गुरोः,
सोऽयं दिव्यचरित्रचित्रितगुणः श्रीविश्वनाथो बुधः।। ४।।

शास्त्रार्थे सुरुचिः शुचिश्च वचने कार्ये च काये तथा
यस्यास्ते सरला च वाङ्मधुमयी यो लोकवन्द्यः सदा।
आचारे सुविचारकोऽस्ति भुवने ज्ञानाग्रगण्यो गुरुः
शर्माऽसौ विबुधः सदा विजयते "श्री विश्वनाथो" ध्रुवम्।। ५।।

धर्माचारविचारनिष्ठमतिमान् काये भृशं कान्तिमान्
विज्ञानां धुरिकीर्त्तनीययशसामग्रेसरः सर्वदा।
शक्तिर्मन्त्रबलेन यस्य सफला देहे सदा राजते
सोऽयं सर्वगुणान्वितो गुरुवरः श्री विश्वनाथोऽधुना।। ६।।

विश्वनाथ! नमस्तुभ्यं ज्ञानविज्ञानरूपिणे।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

### डॉ. फुल्लेलरामचन्द्रडुमहोदयानाम्

विविधविद्याविद्योतितान्तःकरणानां साहित्यशास्त्रमर्मज्ञानां राष्ट्रपतिसम्मानभाजां परमादरणीयानां श्रीमतां फुल्लेलरामचन्द्रडु–महाभागानां स्वागताभिनन्दनम्।।

साहित्येऽतिधुरन्धरो बुधवरो धीराग्रगण्यो गुणी
लोकाचार–विचार–चारुचतुरश्चातुर्यमासादयन्।
कार्याकार्यविचारन्यायविषये यः सत्यसच्चिन्तकः
सौभाग्येन समागतोऽत्र मतिमाञ्छ्री रामचन्द्रः सुधीः।। १।।

दैव्यां वाचि रतः प्रसन्नवदनो विज्ञेषु बद्धादरः
नानाग्रन्थ–निबन्धलेखन–पटुर्वक्ता विपश्चिद्वरः।
विद्यावान् विनयी नितान्तसरलः ख्यातो जगन्मण्डले
वन्द्यः सोऽस्ति महीतले बुधवर "श्रीरामचन्द्रो" बुधः।। २।।

काव्यं येन व्यधायि संस्कृतमयं "गीताञ्जले:" सुन्दरं
येनाकारि विचित्रचारुरचना गीर्वाणवाण्यां सदा।
शिष्या यस्य शताधिकाश्च विबुधा: गायन्ति गीतं गुरो:
सोऽयं दिव्यचरित्रचित्रितबुधो राराजते साम्प्रतम्।। ३।।

राष्ट्रस्यास्य विभूषणं मतिमतां श्रेष्ठ: सतां पूजक:
शास्त्रे दत्तमना सदा विजयते विज्ञो महापण्डित:।
राष्ट्राध्यक्षवरेण योऽस्ति विबुधो विद्वत्सु सम्मानितो
धन्या: स्मस्तव दर्शनेन सुदिनं मन्यामहे साम्प्रतम्।। ४।।

श्रीमन! सौम्य! विवेकचिन्तनरत: शास्त्रेषु वाचस्पति:
नूनं भाग्यवशाद्भवान् शुभदिने कार्यक्रमेऽस्मिञ्छुभे।
विद्यापीठामुपागतोऽस्ति भगवन्! मोदाय न: साम्प्रत,
श्रद्धाभावपुरस्सरं नु भवत: सुस्वागतं कुर्महे।। ५।।

समागताय पूज्याय रामचन्द्राय सादरम्।
समर्प्यतेऽद्य वाक्पुष्पंमुमारमणशर्मणा।'

## अभिनन्दनम्

डॉ. श्रीनारायणमिश्रमहोदयानाम्

विविधशास्त्रमर्मज्ञानां पदवाक्य प्रमाणपारावारीणधुरीणानां सर्वतन्त्रस्वतन्त्राणां काशी–हिन्दू विश्वविद्यालयस्थसंस्कृतविभागाध्यक्षाणां परमादरणीयानां श्रीमतां डा. श्रीनारायण मिश्रमहोदयानां स्वागताभिनन्दनम्।

वेदान्तादिविचारणेऽतिनिपुणो विप्रो महापण्डित:
न्याये चापि कृतश्रमो बुधवरो मान्यस्सतामग्रणी:।
नानाशास्त्रविचारचिन्तनरत: ज्ञानाग्रगण्यस्सदा
लक्ष्मीनाथसुत: समागतबुधो राराजते साम्प्रतम्।। १।।

बाल्ये शास्त्रमधीत्य येन जनकात् लब्धं यशो भूरिशः
काव्यं चापि कृतं तदैव विदुषां मोदाय हर्षप्रदम्।
येनाकारि सदैव चिन्तनमहो शास्त्रेषु तन्त्रेषु च
भाग्येनाद्य समागतोऽस्ति विबुधो मान्यः स नारायणः।। २।।

'वाग्ची' चाथ महाप्रभुः सुविदितो बी.आर. शर्मा बुधः
शोभाकान्तसमाश्च विश्रुतबुधाः शास्त्रार्थपारङ्गताः।
पूज्यश्रीमदनन्तलालसदृशाः विद्वत्प्रियास्तार्किकाः
लब्धा यैः गुरवो विचक्षणतमास्तेभ्यो नमः सादरम्।। ३।।

येनासादितगौरवेण बहुशः शिष्याः प्रशिष्याः कृताः
लोके संस्कृतवाङ्मयस्य विविधा सेवासपर्याः कृताः
नानाग्रन्थनिबन्धलेखनपटुर्वक्ता विपश्चिद्वरः
पूज्यः श्रीयुतपण्डितो बुधवरो 'नारायणो' राजते।। ४।।

गैर्वाण्यां सुविचारकोऽतिनिपुणो विद्वत्प्रियो धार्मिकः
विद्यावान् विनयी नितान्तसरलः ख्यातो जगन्मण्डले।
शास्त्रे दत्तमनास्सदा विजयते स्वाचारबद्धादरः
श्रीनारायणमिश्रवर्यविबुधः सर्वत्र जेगीयते।। ५।।
विद्यावाक्पतये नमोऽस्तु भवते तर्कस्य वारांनिधे!
विद्वन्मान्य महामते! शुभदिने त्वां प्राप्य मोदान्विताः।
विद्यापीठसमागतं बुधवरं श्रीमिश्रनारायणम्
धन्याः स्मः तव दर्शनेन सुदिनं मन्यामहे साम्प्रतम्।। ६।।

श्रीनारायणरूपाय विज्ञाय विबुधाय ते।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।। ७।।

# अभिनन्दनम्

## डॉ. महाप्रभुलालगोस्वामिवर्याणाम्

प्रातः स्मरणीयानां वेदान्त—न्याय—व्याकरण—साहित्य—तन्त्रादिशास्त्रमर्मज्ञानां राष्ट्रपतिसम्मानभाजां विचाराचारनिष्ठानां सम्पूर्णानन्द संस्कृत विश्वविद्यालय—स्याध्यक्षचराणां परमपूज्यानां गुरुचरणानां डा. महाप्रभुलालगोस्वामिपादानां स्वागताभिनन्दनम्।।

मीमांसासु विचारणे कृतमतिर्वेदेषु शब्दे तथा
नानाशास्त्रयथार्थचिन्तनपरो वैज्ञानिकेऽस्मिन् युगे।
व्याख्या—ग्रन्थ—कदम्बलेखनपटुः प्राध्यापको नो गुरुः
गोस्वामी सुमना महाप्रभुयुतः सर्वत्र जेगीयते।।१।।

शिष्या यस्य शताधिकाश्च सुलभाः प्रान्ते बिहारेऽधुना
काश्याञ्चोत्कलबङ्गमध्यविषये देशे विदेशे तथा।
नेपाले च सुशिष्यभागवलिता गायन्ति गीतं गुरोः
सोऽयं श्रीगुरुपादपूज्यसुवरो गोस्वामिलालः प्रभुः।। २।।

ग्रन्था नैकविधाः स्वकीयसरलैः व्याख्याविशेषैर्युताः
मीमांसासु पदे पुराणविषये तन्त्रादिशास्त्रेष्वपि।
योगे प्राकृतभाषया च बहुशो ग्रन्थाः सुसम्पादिताः
यैर्विज्ञैर्विबुधैश्च, ते सुमतयः स्तुत्या हि गोस्वामिनः।। ३।।

'वाग्ची' यस्य गुरुस्तथा बुधवरो धन्यो "द्विवेदीवरः"
श्रीदामोदरलालपण्डितवरो विज्ञोऽस्ति चाध्यापकः।
श्रीशुक्लोऽपि धुरन्धरो बुधवरः साक्षाद्गुरू राजते
शिष्यः श्रीमदनन्तलालसुधियः सोऽयं गुरुस्तत्त्ववित्।। ४।।

विज्ञाय शास्त्रगुरवे तुभ्यं गोस्वामिशर्मणे।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

### पं. वासुदेवइलियटमहाशयानाम्

विविधविद्याविचक्षणानां तार्किकाग्रगण्यानां व्याकरणादिशास्त्रेषु कृतपरिश्रमाणां "पण्डित तिलकानामवभिनवमानवेद पण्डितरत्नादि–सम्मानभाजां परमादरणीयानां श्रीमतां वासुदेवन् इलियटमहोदयानां शताभिषेक–महोत्सवावसरे अभिनन्दनम्।।

शास्त्रार्थे सुरुचिः शुचिश्चवचने कार्येषु काये तथा
यस्यास्ते सरला च वाङ्मधुमयी यो लोकपूज्यस्सदा।
आचारे सुविचारकोऽस्ति विबुधो विद्वत्प्रियो धार्मिकः
जीयात्पण्डितमण्डली कुलमणिः "श्रीवासुदेवन्" सुधीः।। १ ।।

मूर्धन्यो विबुधेषु शास्त्ररसिकः ख्यातः सतामग्रणी
र्विद्यावान् विनयी नितान्तसरलः कान्त्यायुतः कीर्तिमान्।
नानाग्रन्थनिबन्धलेखनपटुः शास्त्रेषु वाचस्पतिः
धन्यः सोऽस्ति महीतले मतिमतां श्रेष्ठश्च वन्द्यो बुधः।। २ ।।

न्याये गौतम एव योऽस्ति भुवने विद्यापतिः केरले
भक्तिर्यस्य सदैव कृष्णचरिते शक्तिश्च कार्येषु च।
विद्यावैभवभूषितो बुधवरो विज्ञो गुणज्ञः क्षितौ
मान्यः "श्रीयुत वासुदेव इलियथ" जीयात्सहर्षं चिरम्।। ३ ।।
लब्धो भाग्यवशाच्च येन विदुषा "श्रीअच्युतः" सद्गुरुः
लब्ध्वा शास्त्रफलं सुपक्वमधुरं श्रीपूर्णवेदे पुरे।
साक्षाद्ब्रह्मवदेव योऽस्ति भुवने सच्चित्स्वरूपे स्थितः
सोऽयं दिव्यचरित्रचित्रितगुणः "श्रीवासुदेवन्" गुरुः।। ४ ।।

धर्माचार–विचार–निष्ठमतिमान् कान्त्या सुदीप्तो भृशं
विज्ञानां भुवनेऽतिकीर्तियशसामग्रेसरो यो बुधः।
शक्तिर्मन्त्रबलेन यस्य सफला देहे सदा राजते
सोऽयं सर्वगुणान्वितो द्विजवरो राराजते साम्प्रतम्।। ५ ।।

वासुदेव! नमस्तुभ्यं ज्ञानविज्ञानरूपिणे।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

### पं. रमाकान्तशुक्लमहोदयानाम्

विविधशास्त्ररसिकानामर्वाचीनसंस्कृत—समुद्धारकाणां कविप्रवराणां नाट्य—कथा—काव्यादि सर्जनविचक्षणानां जैनसाहित्यविचारकाणां परमसम्माननीयानां सुहृद्वराणां श्रीमतां डा. रमाकान्तशुक्लवर्याणामभिनन्दनम्।।

गैवाण्यां सुविचारकोऽतिनिपुणः सौन्दर्यविज्ञो बुधः
यस्यास्ते मधुरा च वाङ्मधुमयी यो लोकपूज्यस्सदा।
साहित्येऽतिकृतश्रमो द्विजवरो धीराग्रगण्यः सुहृद्
जीव्याद्वर्षशतं मुदा भुवि रमाकान्तः सुशुक्लः सुधीः।। १।।

शिष्याणामनुरञ्जको बुधवरो विद्वत्प्रियो धार्मिकः
सौम्यः सत्यरुचिः सतां कुलमणिर्विज्ञेषु बद्धादरः।
विद्यावान् विनयी विवेकवलितो विज्ञो बुधो वन्दितः
श्रीयुक्तो मतिमान् सदा भुवि रमाकान्तश्चिरं जीवतु।। २।।

येनासादितगौरवेण बहुशः शिष्याः प्रशिष्याः कृताः
लोके संस्कृतवाङ्मस्य बहुधा सेवा समासादिता।
जीव्याद्वर्षशतं सुखेन यशसा सर्वत्र सम्मानितः
शुक्लः श्रीयुतपण्डितो भुवि रमाकान्तः सुधीः धीधनः।। ३।।

सन्तुष्टिश्च सदा प्रसन्नवदने काये च पुष्टिस्तथा
यस्यास्ते सरला सुकोमलमतिर्विद्वज्जनानां प्रियः।
पायात्तं भुवि देवसाधुनिकरः पञ्चाशदब्देऽधुना
श्रीशुक्लं नु धुरन्धरं बुधवरं श्लाघ्यं सुहृद्भूषणम्।। ४।।

शिष्याः यस्य शताधिकाश्च सुलभाः दिल्ल्यां गुरोर्विद्यया
काश्मीरे च हिमाचले च बहुशः प्रान्ते बिहारे तथा।
औदिच्येऽपि बुधाः स्तुवन्ति शतशो गायन्ति कीर्तिं गुरोः
धन्योऽसौ सुधियां सतां मतिमतां श्रेष्ठश्चिरं जीवतु।। ५।।

श्रीरमाकान्तशुक्लाय सुहृदे विबुधाय च।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।

## अभिनन्दनम्

### प्रो. कृष्णनुन्निकविरत्नानाम्

विविधविद्याविद्योतितान्तःकरणानां स्वाचारबद्धादराणां केरलीयाश्वघोषाणां कवि मूर्धन्यानां परमादरणीयानां श्रीमतां प्रो. कृष्णनुण्णिकविरत्नानां जन्मशताब्दावसरे शुभाभिनन्दनम्।

गैर्वाण्याः समुपासको बुधवरो विज्ञेषु बद्धादरः
शास्त्रारण्यमृगाधिपो द्विजवरः साहित्यरत्नाकरः।
विद्यावैभवभूषितो गुणनिधिः विज्ञो महापण्डितो
जीव्याद्वर्षशतं कुटुम्बसहितः श्रीकृष्णनुण्णिः'' कविः।। १।।

बाल्ये येन कृतः श्रमो बहुविधः शास्त्रेषु सम्यक्तया
धृत्वा 'नाणुगुरुं' स्वकीयहृदये स्मृत्वा तदीयान् गुणान्।
ग्रन्थान् नैकविधानधीत्य मतिमान् सारं गृहीत्वा पुनः
चक्रे चक्रधरस्य चिन्तनपरं काव्यञ्च ''पञ्चामृतम्।''।। २।।

येनाकारि मनोहरं 'त्रिमधुरं' काव्यं यशोवर्द्धकं
येनालेखि विशिष्टकाव्यनिचयः विद्वत्कृते सौख्यदः।
लोके संस्कृतिरक्षणाय विविधाः सेवाः कृताः येन वै
सोऽयं दिव्यचरित्रचित्रितवपू रराजते साम्प्रतम्।। ३।।

त्यागे योऽस्ति दधीचिरेव भुवने सत्ये हरिश्चन्द्राट्
शास्त्रे व्याससमः कविर्भुवि मतो नूत्नोऽश्वघोषो बुधैः।
दृष्ट्वा तस्य सुधीवरस्य सहसा सम्मानमत्यादरात्
धन्याः स्मः शुभदर्शनेन सुदिनं मन्यामहे साम्प्रतम्॥ ४॥

केरलीयाश्वघोषाय श्रीकृष्णनुण्णिशर्मणे।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा॥

गुरून् नत्वा पूज्यान् विविधविबुधान् शास्त्ररसिकान्
विवेकग्रन्थेऽस्मिन् विरचितमिदं श्लोकनिवहैः।
विवेकाब्धेः पारं तरितमनसां शास्त्रविदुषां–
मुमानाथो भक्त्या व्यलिखदिह मोदाय शतकम्॥

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य–विद्यावाचस्पति डा. उमारमणझाशर्मविरचितायां विवेकसहस्र्यामभिनन्दनशतकं सम्पूर्णम्।

# १०. प्रणामाञ्जलि–शुभाशीर्वाद–शतकम्



दिव्यानन्दकरी सदा सुखकरी सोढ्वा च दुःखं भृशं
वस्त्रं भोज्यमथापि सौख्यसहितं सन्त्यज्य चान्नं यदि।
नानाक्लेशमवाप्य सन्ततिकृते चिन्तारता सर्वदा
माता साऽद्य सरस्वती गुणवती पायात्सुतान् नः सदा।।

# वाक्पुष्पाञ्जलिः

## १. म.म. गोपीनाथकविराजमहोदयानाम्

महामहोपाध्याय डाक्टर गोपीनाथ कविराजमहोदयानां जन्मशताब्दावसरे पुष्पाञ्जलिः।

वेदाङ्गादिविचारणाकृतमतिस्तन्त्रे च मन्त्रे तथा
न्याये गौतम एव यस्तु भुवने विद्वत्प्रियो धार्मिकः।
योगे व्याकरणे पतञ्जलिसमो ज्ञानाग्रगण्यो बुधो
गोपीनाथसुधीवरो यतिवरः पायाद्बुधान् स्वर्गतः।। १ ।।

दैव्यां वाचि रतः प्रफुल्लवदनो विज्ञेषु बद्धादरः
विज्ञानां धुरिकीर्त्तनीययशसामग्रेसरो धीवरः।
व्याख्या–भाष्य–निबन्धलेखनपटुर्मान्यः सतामग्रणीः
पायात्संस्कृतसेवकान् करुणया गोपीपतिः स्वर्गतः।। २ ।।

सत्ये धर्मसमः सदा गुरुवरो मूर्त्तिर्विवेकस्य यः
सौम्यः कान्तियुतः सदा मतिमतां श्रेष्ठश्च वन्द्यस्तथा।
विद्यावान् करुणावतारपुरुषः ख्यातो जगन्मण्डले
गोपीनाथसुधीवरो विजयते स्वर्गेऽपि सम्मानितः।। ३ ।।

येनाकारि विशिष्टतन्त्ररचना मन्त्रे च सिद्धिर्ध्रुवं
येनापाठि सुशिष्यसन्ततिशतं सद्विद्यया सद्धिया।
सोऽयं दिव्य–चरित्र–चित्रित–महस्स्वर्गेऽधुना राजते
ख्यातः श्रीकविराजपादविबुधो नाकेऽधुनाऽध्यापकः।। ४ ।।

विद्यावाक्पतये नमोऽस्तु भवते तन्त्रस्य विज्ञाय ते
पुण्यायात्महितार्थचिन्तनरतज्ञानाय पूज्याय ते।
गोपीनाथगुरोऽद्य पुण्यदिवसे पुष्पाञ्जलिस्तेऽधुना
साक्षादेव समर्प्यते खलु मया शिष्येण मुग्धेन ते।। ५ ।।

कविराजाय विज्ञाय गोपीनाथाय सादरम्।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।। ६ ।।

# श्रद्धाञ्जलिः

## २. डॉ. सम्पूर्णानन्दवर्याणाम्

परमश्रद्धेयानां विविधविद्याविद्योतितान्तःकरणानां सारस्वताग्रगण्यानां शिक्षाविदां राजनीतिविशारदानां विद्यालयसंस्थापकानां स्वर्गतानां डा. सम्पूर्णानन्द– वर्याणां जन्मशताब्दसमारोहावसरे वाक्पुष्पाञ्जलिः।।

राजेन्द्रस्य सखा सदैव मुदितः सोढ्वा च दुःखं भृशं
मान्यश्चापि जवाहरादिसुधियां यो लोकवन्द्यः सदा।
कारागारमवाप्य कष्टनिचयं सन्न्यायमार्गे दृढ –
आनन्दो जगतीतलेऽपि सुखदः स्वर्गे च सम्पूर्णतः।।१।।

सम्पूर्णानन्दरूपो विविधगुणयुतो दीनबन्धुश्च नेता
वेत्ता यो ज्ञानचेता मनुजकुलमणिः सत्यनिष्ठो महात्मा।
दीनानार्त्तान् नरान् यो विपदि च पतितान् नित्यमुद्धर्तुकामः
वन्दे तं ज्ञानमूर्तिं नरवरमनिशं नाकलोकस्थमीड्यम्।। २।।

सत्ये धर्मसमः सदा क्षितितले मूर्तिर्विवेकस्य यो
गाम्भीर्ये जलधिः क्षमाऽवनिसमा त्वासीद्धि नैसर्गिकी।
यस्मिन् सर्वगुणाः सदैव लसिताः स्वाभाविकी दक्षता
सः सम्पूर्णयुतो बुधो दिवि चिदानन्दस्वरूपे स्थितः।। ३।।

पूज्योऽसौ देवलोके किरति दिशि यशः क्रान्तिदर्शी महात्मा
चांग्लेयानां विजेता विविधगुणचयो राजनीतौ च दक्षः।
लोकार्थं दत्तचित्तो सततमनुचरो गान्धिवर्यस्य मार्गे
सम्पूर्णानन्दवर्यो भुवि दिवि च महारत्नराशिर्गुणाढयः।। ४।।

गैर्वाणीसमुपासको बुधवरो सत्कार्यनिष्ठः सदा
लोके संस्कृतिरक्षणाय सततं दत्तावधानो भृशम्
यः सम्पर्णूतया समस्तभुवने तेने सुखं मङ्गलं
वन्दे तं करुणाकरं नरवरं चानन्दरूपं परम्।। ५।।

सम्पूर्णानन्दरूपाय विज्ञाय परमात्मने।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।

# शोकाञ्जलिः

## स्वर्गतान् कविशेखरबदरीनाथझामहाशयान् प्रति

साहित्येऽतिधुरन्धरो बुधवरो मान्यः सतां पण्डितः
पूज्यः श्रीकविशेखरो द्विजवरः सच्छ्रोत्रियो मैथिलः।
नानाकाव्यसुलेखको मतिमतां श्रेष्ठश्च वन्द्यः सदा
पायान्नः सकलान् विशिष्टगुणवान् स्वर्गान्नतान्
नो गुरुः।।१।।

येनाकारि विशिष्टकाव्यरचना साहित्यशास्त्रे महा—
काव्यं चारुतरं प्रशस्तिवलितं राधाविवाहाह्वयम्।
चम्पूश्चापि गुणेश्वरस्य कलिता विद्वत्सु चर्चापरा
तं वन्दे कविशेखरं नु बदरीनाथं गुरुं स्वर्गतम्।। २।।

यो देवार्चनकार्यचिन्तनरतो विष्णोः स्तुतौ, सर्वदा
धर्मात्मा मतिमान् नरोत्तमबुधः सत्संस्कृतेः रक्षकः।
विद्यावान् विनयी नितान्तसरलः ख्यातो जगन्मण्डले,
तं वन्दे भुवने दयालुबदरीनाथं बुधं स्वर्गतम्।। ३।।

किञ्चिद्ज्ञानलवं गुरोरधिगतं भाग्यान्मया सौख्यदं
साहित्ये हि रसार्णवस्य सुधियः ज्ञानाग्रगण्यात् ततः।
स्मृत्वा यं कविशेखरं बुधवरं मोमुद्यते मे मनः,
हन्त! क्वाद्य गतः स शास्त्ररसिको भूलोकतो मे गुरुः।। ४।।

कविशेखर! विज्ञाय बदरीनाथाय ते नमः।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।।

# शोकाञ्जलिः

## ४. डा. गोपिकामोहनभट्टाचार्यस्मृतौ

हतश्रीः सञ्जाता बुधवरवियोगे वसुमती
दिशाः सर्वाः शून्याः कुटिलविधियोगाच्च भुवने।
अहो धातः! क्रूरः परमजठरो भासि कुटिलः
त्वयाऽकस्मात्कस्माद् हत इत इनो "मोहन" इति।। १ ।।

नूनं ते करुणैव नास्ति हृदये नो वा दया दृश्यते
स्नेहस्यापि च का कथास्ति भवतो लेशो न धर्मस्य च।
येनेत्थं सहसा त्वया बत हतः श्रीगोपिकामोहनः
मन्ये त्वत्सविधे न कापि गणना धातस्त्वया किं कृतम्।। २ ।।

न्याये यस्य गतिस्सदाऽप्रतिहता शास्त्रेषु वाचस्पतिः
विद्यावान् विनयी नितान्तसरलः ख्यातो जगन्मण्डले।
शोधग्रन्थ–निबन्ध–लेखनपटुर्वक्ता विपश्चिद्वरः
पूज्यो हन्त! गतः स मोहन इति प्राध्यापको भूतलात्।। ३ ।।

दैव्यां वाचि रतः प्रसन्नवदनो विज्ञेषु बद्धादरः
ग्रन्थ–ग्रन्थि–विचारणे दृढमतिः शास्त्रेषु लीनः सदा।
"शिष्याः प्राणसमाः" सदा कृतमतिः श्रीगोपिकामोहनः
त्यक्त्वा नो विबुधो विचारचतुरो नाकेऽधुनाऽध्यापकः।। ४ ।।

शिष्या यस्य शताधिकाश्च भुवने गायन्ति गीतं गुरोः
बङ्गे चोत्तरपश्चिमादिविषये देशे विदेशे तथा।
पूज्यः सो धरणीतलाद् बत गतो विज्ञो महापण्डितः
भट्टाचार्यवरो नरो बुधवरः श्रीगोपिकामोहनः।। ५ ।।

भट्टाचार्य! नमस्तुभ्यं श्रद्धयाऽद्य समर्प्यते।
स्वहार्दिकं हि वाक्पुष्पमुमारमणशर्मणा।। ६ ।।

# श्रद्धाञ्जलिः

## ५. पट्टाभिरामशास्त्रिणां स्मृतौ

मीमांसासु विचारणे कृतिमतिः शास्त्रेषु रत्नाकरः
ग्रन्थग्रन्थिनिवारणे दृढ़मतिर्लोकेषु वन्द्यो गुरुः।
नानाशास्त्रविचारदक्षधिषणो ज्ञानाग्रगण्यो बुधः
हन्त! क्वाद्य गतो महामतियुतः पट्टाभिरामोऽधुना।।१।।

शिष्याः यस्य सहस्रशोऽपि भुवने गायन्ति गीतं गुरोः
विज्ञा "मण्डनमिश्रवर्यसदृशाः" मान्याः प्रकाण्डाः क्षितौ।
पूज्यः सो धरणीतलात् बत गतो क्वासौ महापण्डितः
शास्त्री शास्त्रधुरन्धरो बुधवरः पट्टाभिरामः सुधीः।। २।।

"शिष्याः प्राणसमाः" सदा कृतमतिः शास्त्रेषु लीनः सदा
दैव्यां वाचि रतः प्रसन्नवदनो काये भृशं कान्तिमान्।
व्याख्या–भाष्य–निबन्धलेखनपटुर्वक्ता विपश्चिद्वरः
त्वासीच्छास्त्रिवरो विशिष्टपुरुषो लोके सतामग्रणीः।। ३।।

धर्माचारविचारनिष्ठकुशलो विद्वत्प्रियो धार्मिकः
विज्ञानां धुरिकीर्त्तनीययशसामग्रेसरो यः सुधीः।
साहित्येऽपि कृतश्रमो बुधवरो मन्त्रेषु तन्त्रेष्वपि
पूज्यो हन्त! गतः क्व शास्त्रवलितः पट्टाभिरामः प्रियः।। ४।।

शौचाचारादिनिष्ठे द्विजमहितकुले वैदिके पूज्यवंशे
ख्यातः पट्टाभिरामो बुधजनतिलको ज्ञानमूर्तिर्वरेण्यः
स्वाध्याये तीक्ष्णबुद्धिस्त्वभवदिह मतिमान् सर्वशास्त्रार्थवेत्ता
नाके वन्द्यो महर्षिः सुरमुनिवलिते राजते दिव्यलोके।। ५।।

शास्त्रिवर्य! नमस्तुभ्यं श्रद्धयाद्य समर्प्यते।
स्वसौहार्दिकवाक्पुष्पमुमारमणशर्मणा।।

# श्रद्धाञ्जलिः

## ६. पं. रघुनाथप्रसादचतुर्वेदस्मृतौ

विविधशास्त्रमर्मज्ञानां समाजसुधारकाणां संस्कृतप्रचारकाणां गद्यपद्योभयरचनाचातुरी चतुराणां स्वर्गतानां परमपूज्यानां पण्डितरघुनाथ—प्रसादचतुर्वेदवर्याणां स्मृतौ श्रद्धाञ्जलिः।।

दीनानां हितचिन्तको बुधवरो विज्ञो गुणाग्रेसरः
नानाशास्त्रयथार्थचिन्तनरतः सामाजिको धार्मकः।
व्याख्या—भाष्य—निबन्धलेखनपटुर्वक्ता विपश्चिद्वरः
हन्त श्रीरघुनाथशर्मचरणो नीतो विधात्रा हठात्।।१।।

दैव्यां वाचि रतः प्रसन्नवदनो विज्ञेषु बद्धादरः
सौम्यः सत्यरुचिः सतां कुलमणिः कृष्णेऽतिभक्तिं वहन्।
विद्यावान् विनयी नितान्तसरलः ख्यातो जगन्मण्डले
पूज्यः श्री रघुनाथशर्मचरणः पायाच्चिरं स्वर्गतः।। २।।

धर्मार्थे सुरुचिः शुचिश्च वचने कार्येषु निष्ठा सदा,
यस्यासीन्मधुरा च वाङ्मधुमयी यो लोकपूज्यस्सदा।
आचारे सुविचारकोऽतिनिपुणो विद्वत्प्रियो विश्रुतः
वन्द्योऽसौ रघुनाथवर्यविबुधो नाकेऽधुना राजते।। ३।।

धन्या सा मथुरापुरी समभवल्लोके पुनर्विश्रुता
लेभे जन्म सतां कुले द्विजवरो मान्योः यदा कर्मठः।
लोकाचारविचारसारनिपुणः सत्कर्मनिष्ठः सदा
पायान्नः रघुनाथशर्मचरणो दिव्यस्स नाकात् सदा।। ४।।

येनाकारि विशेषकाव्यरचना हिन्द्यां तथा संस्कृते
गान्धी—सूर—जवाहरादिविषये सद्ग्रन्थरत्नं परम्।
निम्बादित्य—विशिष्टशास्त्रनिचयं "श्रीकालिदासाष्टकम्"
टीकाकारि मनोहरा च सुधिया काव्यप्रकाशस्य वै।। ५।।

चतुर्वेदः प्रसादोऽसौ रघुनाथो गुणान्वितः।
प्रीयतां श्रद्धयावाग्भिरुमारमणशर्मणा।। ६।।

## श्रद्धाञ्जलिः

### ७. डॉ. श्रीनिवासशास्त्रिस्मृतौ

विविधशास्त्रमर्मज्ञानां साहित्यशास्त्रविचक्षणानां बौद्धदर्शनारण्यकेसरिणां न्यायशास्त्र धुरन्धराणां दयानन्दसिंहासनाध्यक्षाणां परमादरणीयानां स्वर्गतानां डा. श्री .निवासशास्त्रिवर्याणां स्मृतौ श्रद्धाञ्जलिः।.

न्याये यस्य गतिः सदाऽप्रतिहता चान्येषु शास्त्रेष्वपि,
यो वाचस्पतितत्त्वचिन्तनरतो बौद्धादिपक्षैः सह।
नानाग्रन्थनिबन्धलेखनपटुर्मान्यः सतां सर्वदा
शास्त्री श्रीलनिवासपण्डितवरो नाकेऽधुनाध्यापकः।। १।।

वेदानां परिशीलने कृतमतिः सूक्ष्मेक्षया यो बुधः
क्लिष्टग्रन्थिनिवारणेऽतिनिपुणो विज्ञो महापण्डितः।
बौद्धानां परिचिन्तने बुधवरो दत्तावधानः सदा
हन्त! क्वाद्य गतः स पण्डितवरः शास्त्री गुणज्ञो गुरुः।। २।।

दयानन्दस्यासौ विविधविषये ग्रन्थरचनाः
विधायापूर्वान् यो विबुधजनमान्योऽतिसरलः।
कुरुक्षेत्रे पुण्ये विदितविदितो धर्मनिरतो
सदा पूज्यो लोकेऽभवदिह सदा शास्त्रनिपुणः।। ३।।

दैव्यां वाचि रतः प्रसन्नवदनो साहित्यरत्नाकरः
हिन्द्यां संस्कृतवाङ्मये च विविधाः लेखाः निबन्धादयः।
चांग्ले यस्य महामतेः बहुविधा पाण्डित्यपूर्णा कृतिः
तं वन्दे भुवि कीर्त्तनीययशसामग्रेसरं स्वर्गतम्।। ४।।

तर्के तन्त्रे च मन्त्रे विविधबुधकृतौ यत्नमादाय दृष्ट्वा
मत्वा ज्ञात्वा च तत्त्वं व्यलिखदिह बुधो साररूपं समस्तम्।
मान्यो धन्यो वदान्यो भुवनमणिरिवासीत् सदा लोकवन्द्य:
शास्त्री स: श्रीनिवासो निवसति सदने स्वर्गतानां सुपूज्य:।। ५।।

शास्त्रिणे ज्ञानरूपाय श्रीनिवासाय ते नम:।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।। ६।।

# शोकाञ्जलि:

## ८. इंदिरागांधीस्मृतौ

मोतीलालस्य पौत्री विविधगुणवती मुख्यनेत्री विधात्री
राष्ट्रार्थं वै सदा या जनहितकरणे त्यक्तजीवा प्रधाना।
याऽसील्लोकार्थसिद्ध्यै भरतभुवि रता चिन्तने चातिदक्षा
सा राष्ट्रस्यास्य माता शिशुजनविमुखी हा गता कुत्र चाद्या।। १।।

आसामे या परमजटिला क्लेशपूर्णा समस्या
पाञ्चाले या त्वजनि सहसा क्रान्तिरेका विशेषा।
काश्मीरे या सततजटिलाऽसीत्समस्या विशाला
तामुद्धर्तुं प्रतिदिनमहो याऽकरोत् तीव्रयत्नम्।। २।।

हतश्री: सञ्जाता कुटिलविधियोगेन वसुधा
दिशा शून्या जाता दिवि समभवद् ध्वान्तपटलम्।
न जाने कुत्रास्ते सकलजननेत्री प्रियतमा
हतेयं हा दुष्टैर्भरतभुवि मुख्याद्य सहसा।। ३।।

लोके हा हा रुदन्त: करुणरसभरा अश्रुपूर्णाश्च खिन्ना:
दृश्यन्ते व्यग्रचित्ता: शिशुयुवकजना: प्रौढ़वृद्धाश्च नार्य:।
किं यातं कैश्च दुष्टैरियमतिसरला हा हता देशमाता
चेत्थं कारुण्यपूर्णं जनरवजनितं व्याकुलं विश्वमेतत्।। ४।।

नूनं ते करुणैव नास्ति हृदये नो वा क्षमा दृश्यते
सौजन्यस्य च का कथापि भवतो लेशो न स्नेहस्य ते।
मन्ये त्वत्सविधे न कापि गणना धीरस्य वीरस्य वा
येनेत्थं सहसेन्दिराद्य निहता धातस्त्वया किं कृतम्।। ५।।

या नित्यं जनचिन्तने दृढ़रता नेत्रीन्दिरा पूजिता
या स्वार्थं सततं विहाय बहुशः सेवामकार्षीन्मुदा।
हा हा हन्त गता क्व साद्य सहसा देशस्य धात्री प्रिया—
हा हा चाद्य गता हि सा भगवती सन्तज्य लोकं ध्रुवम्।। ६।।

विश्वेऽस्मिन् या प्रचुरमधुरं भावपूर्णं मनोज्ञं
सन्तेनेऽसौ जनहितकृते मोदपूर्णं विचारम्।
कीर्तिर्यस्या रुचिरधवला भासते विश्वलोके
धन्या पूज्या सकलमनुजैरिन्दिरा हा हताद्य।। ७।।

समस्तराष्ट्रं परिचालयन्ती
विश्वस्य मध्येऽतिविचारशीला।
त्यक्त्वा क्व याता सचिवप्रधाना
हा हा हतेयं खलु राष्ट्रमाता।। ८।।

हे लोकमातृपदभाजनशक्तिपूर्णे
लोकोपकारकरणे कटिवद्धचित्ते।
याऽसीस्सदा त्वमथ कुत्र गता विसृज्य
लोकानकालपतितान् खलु दुःखपङ्के।। ९।।

प्राप्यापि वैभवपदं न चकारगर्वं
साम्राज्यशक्तिवलितापि न दम्भमागात्।
पूज्या सदा सकललोकहिताय याऽसीत्
श्रद्धाञ्जलीनुपहरामि तदात्मशान्त्यै।। १०।।

# श्रद्धाञ्जलिः

## १. कमलेशकुमारीकुलश्रेष्ठां प्रति

या सङ्गीतकलासु चातिनिपुणा पूज्या गुणाढ्या स्मृता
नानावाद्यसुतानगानकुशला स्नेहास्पदं सर्वदा।
श्रेष्ठा या कमलेशनामविदिता शिष्यानुरक्ता चिरं
सा मातेव सुखप्रदाऽवतु सदा स्वर्गात् प्रसन्ना सती।।१।।

दीनानां हितचिन्तने प्रतिपलं या सर्वदा मातृवत्
स्नेहेनैव चकार कार्यमतुलं शिष्यार्थमेवं सदा।
या वीणावरदण्डमण्डितकरा श्रीशारदावत् क्षितौ
पायात्सा कमलेशरूपमहिला शिष्यान्सदा स्वर्गतः।। २।।

आसीद् या सततं विनोदलहरी ज्ञानाग्रगण्या महा–
पुण्या चातिधुरन्धरा गुणवती सङ्गीतविद्याधरी।
नानाशास्त्रवती कलासु कुशला विद्वत्प्रिया धार्मिका
श्रेष्ठा श्रीकमलेशकाव्यविदुषी प्राचार्यवर्या महः।। ३।।

वीणावाद्य–विनोदमोद–भरणे तानादिविज्ञा परा
नानावाद्यमृदङ्गतालकुशला लास्ये च हास्ये रता।
आचारेऽपि विचारिका बहुगुणा कृष्णेऽर्पिता स्वात्मना
पूज्या नः कमलेशनृत्यलसिका पायादपायाच्चिरम्।। ४।।

शिष्याः सन्ति शताधिकाश्च भुवने सङ्गीतविद्यायुताः
दिल्ल्याञ्चोत्तरदेशमध्यविषये बुन्देलखण्डे तथा।
पाञ्चालेऽपि गिरन्ति कीर्तिवचनं यस्याः सदा सादरं
तां देवीं करुणामयीं गुणवतीं वन्दे ततः स्वर्गताम्।। ५।।

करुणामूर्त्तिरूपायै स्वर्गतायै नमोऽस्तु ते।
समर्प्यतेऽत्र वाक्पुष्पमुमारमणशर्मणा।। ६।।

## १०. म.म. डा. गङ्गानाथझाशर्माणं प्रति

गङ्गानाथवरो बुधो मतिमतां श्रेष्ठश्च पूज्यस्सदा
नानाग्रन्थ—निबन्धलेखनपटुर्मान्यः सतामग्रणीः।
आसीच्छ्रोत्रियवंशमौलिमुकुटः सज्ज्ञानरत्नाकरः
यो वन्द्यो भुवि सर्वदा दिवि गतं तं नौमि बद्धाञ्जलिः।।

## ११. म.म. डा. उमेशमिश्रं प्रति

नानाशास्त्रविचारको मुनिवरः सत्संस्कृतेः रक्षकः
शास्त्रग्रन्थसुलेखकः कुलपतिः विद्वत्सभापूजितः।
आसीत्संस्कृतपोषको बुधवरो यो मे गुरुर्ज्ञानदः
वन्द्यं श्रीमदुमेशमिश्रविबुधं तं नौम्यहं स्वर्गतम्।।

## १२. नैयायिक प्रवर प. रूपनाथझाशर्माणं प्रति

साक्षाद्यो विबुधाग्रजो बुधवरः श्रीगौतमः तर्कधीः
शास्त्रारण्यमृगेन्द्र एव मतिमान् वाचस्पतिर्वा सुधीः।
शास्त्रार्थेऽति धुरन्धरो मतिमतां सच्छ्रोत्रियो धार्मिकः
वन्दे तं निजमातुलं दिवि गतं श्रीरूपनाथं गुरुम्।।

## १३. नैयायिक – मीमांसक पं. दुर्गाधर झाशर्माणं प्रति—

मीमांसादिसमस्तशास्त्रविपिने सत्केशरीवत्सुधीः
धर्मस्यापि विचारको बुधवरो मान्यो विशिष्टो गुरु
आसीद् यो बहुशास्त्रचिन्तनरतः सच्छ्रोत्रियो मैथिलः
पूज्यं तं सुरलोकमाप्तमनिशं दुर्गाधरं नौम्यहम्।।

## १४. म.म. बालकृष्णमिश्रं प्रति—

न्याये योऽति धुरन्धरो बुधवरः सच्छोत्रियो मैथिलः
प्रज्ञावान् भुवि सर्वशास्त्रविपिने शास्त्रार्थपञ्चाननः।
प्राचार्यः सुविचारको मतिमतां श्रेष्ठश्च वन्द्यस्तथा।
तं वन्दे खलु मातुलं दिविगतं श्रीबालकृष्णं सदा।।

# वाक्पुष्पाञ्जलिः

## १५. श्रीरामकृष्ण—स्तुतिः

दीनानां हितचिन्तको यतिवरो नम्रश्च धीरस्तथा
दुर्गाराधनतत्परो निशि दिवा सौम्यः सतामग्रणीः।
ग्रामीणानथ पामरानपि जनानुद्धर्तुकामः सदा
वन्द्यः सोऽस्ति महीतले नरवरः श्रीरामकृष्णश्चिरम्।। १ ।।

यो नासीद्बहुशास्त्रतत्त्वनिपुणः पाण्डित्यपूर्णोऽथवा
नानारूपमनोहरा लघुकथाः संश्राव्य यो भक्तिमान्।
उद्बुद्धानकरोत् जनान् स्ववचसा ज्ञानामृतेनापि च
तं श्रेष्ठं परमात्मबोधजनकं श्रीरामकृष्णं भजे।। २ ।।

त्यक्त्वा सौख्यपरं समस्तसुलभं भुक्तिप्रदं साधनं
लीनोऽभूत्सततं परार्थकरणे मुक्तिप्रदे साधने।
श्रेयःकर्म सदैव येन यतिना प्रेयांश्च त्यक्त्वा पुनः
येनाकारि तमेव नौमि शिरसा श्रीरामकृष्णं यतिम्।। ३ ।।

शिष्यो यस्य गुणान्वितो भुवि विवेकानन्दसंज्ञः सुधी
पाश्चात्यानपि भारतीयविधिना संबोधनयन् कीर्तिमान्।
सन्मार्गे कृतवान् जनान् बहुविधान् धर्मोपदेशेन यः
तस्मै श्री नरपुङ्गवाय तु नमः श्रीरामकृष्णाय वै।। ४ ।।

पत्नी या सरला सुबोधभरिता ज्ञानाग्रगण्या सती
नानाक्लेशसमन्वितापि सततं पत्युश्च मार्गे स्थिता।
धन्या साद्य महीतले प्रतिगृहं श्रीशारदा स्तूयते
तां देवीं शिरसा नमामि जननीं श्रीरामकृष्णान्विताम्।। ५ ।।

शान्तं सौम्यमनन्तकीर्तिधवलं क्षान्तञ्च दान्तन्तथा
पूजाभ्यासरतः सदा जनहिते ज्ञानोपदेशं मुहुः।

पूज्यो यः कृतवान् विशिष्टपुरुषो वन्द्यश्च धन्यस्तथा
तं वन्दे करुणाकरं नरवरं श्रीरामकृष्णं यतिम्।। ६।।

रामकृष्ण! नमस्तुभ्यं सौम्याय परमात्मने।
समर्प्यतेऽद्य वाक्पुष्पमुमारमणशर्मणा।। ७।।

## शुभाशिषः

### चतुरः पुत्रान् प्रति आशिषः —

**श्रीविद्यारमणो**ऽस्तु पूर्णकुशलः बैङ्कस्य कार्ये रतः,
आचार्यश्च **किशोर** एव सफलः गीर्वाणवाणीयुतः।
मेधावी **गिरिजेश** नामकसुतो वादे विवादे जयी
जीयासुः **मथुरापतिः** सुमधुरः सर्वेऽस्मदीयाः सुताः।। १।।

### धर्मपत्नीं श्रीमतीं विभां प्रति—

दौहित्री कविशेखरस्य विदुषी श्रीतन्त्रनाथात्मजा
जाया मे सरला विनीतमहिला धमार्थकार्ये रता।
सुस्निग्धा सुखदुःखयोरनुपदं या नात्यजन्मां प्रिया
स्वस्था स्यात्सहधर्मिणी पतिरता प्राणप्रिया सा **विभा**।। २।।

### प्रथमं सुशिष्यं डा. धनीरामशास्त्रिणं प्रति—

नीतिग्रन्थविचारको द्विजवरो द्वैगर्तवासी सुधीः
छात्राणामुपकारको नरवरो भक्तिं गुरौ निश्छलाम्।
कुर्वन् यः प्रथमश्च शिष्यमतिमान् शोधे पटुः पूर्णतः
शास्त्री श्रीधनिरामनामविबुधो जीव्यात्सहर्षं चिरम्।। ३।।

### द्वितीयां शोधच्छात्रां डा. अनुराधाडोगरां प्रति—

डोग्रानुराधा मम शोधशिष्या चकार शोधं मधुकेलिवल्ल्याम्।
पुत्रप्रपौत्रादिसमन्विता सा जीव्याच्चिरं कीर्तिमती प्रसन्ना।। ४।।

केन्द्रीय–विद्यालय–शिक्षिकां डा. कमलेशदीक्षितं प्रति–

शिष्या मदीया कमलेशनाम्नी श्रीजानकीनाथकृते च ग्रन्थे।
शोधं चकराशु गुरुप्रयत्नाज्जीव्याच्चिरं सा पतिपुत्रयुक्ता।। ५।।

ज्ञानवृद्धं शोधच्छात्रं डा द्वारकानाथशर्माणं प्रति शुभकामना–

दशावतारविज्ञो यः कृतभूरिपरिश्रमः।
शास्त्री स द्वारकानाथः पूज्यो वृद्धः सुखं व्रजेत्।। ६।।

भलेई मातुः पूजकं डा. लोकीनन्दशर्माणं प्रति–

लोकीनन्दः परमनिपुणः कर्मनिष्ठो धनाढ्यः
तेने शोधं जटिलकठिनं न्यायतन्त्रे बुधो यः।
कार्ये लेखे वचनचतुरः पाककार्येऽपि दक्षो
जीव्यात्सोऽयं प्रमुदितमनाः दीर्घकालं प्रसन्नः।। ७।।

महाराणा संस्कृत महाविद्यालस्य प्राचार्यं डा. मिथिलेशशर्माणं प्रति–

कथाकल्लोलिनी यस्य शोधस्य विषयोऽभूत्
वैयाकरणमूर्द्धन्यो मिथिलेशः प्रसीदतु।
महाराणामहाविद्यालयप्राचार्यगौरवं
धत्ते शास्त्रेषु पाण्डित्यं शिष्यो मे चतुरो महान्।। ८।।

डा. बाबूरामशर्माणं प्रति–

बाबूरामः परमचतुरो बुद्धिमान् मे च शिष्यः
भक्तिग्रन्थे कुमुदकृपया शोधकार्यं चकार।
जीव्याद्दीर्घं तनयसहितो धाम्नि कैवल्ययोगे
लोनावालाप्रथितनगरे कार्यमासाद्य योऽस्ति।। ९।।

डा. प्रियतमदत्तशास्त्रिणं प्रति–

श्रीआनन्दकरे विशालजटिले वृन्दावनाख्ये प्रिये
ग्रन्थे यः कृतवांश्च शोधमखिलं शिष्यश्च मे सर्वथा।

नाट्ये नृत्यमये च येन बहुधा साफल्यमासादितं
शास्त्री प्रीतमदत्त एष निपणो जीयान्सहर्षं चिरम्।।१०।।

डा. राजेन्द्रशर्माणं प्रति–

शोधं यो कविशेखरस्य विषये ज्ञात्वा च सम्यग्व्यधात्
शिष्यो मे सरलो बुधो द्विजवरो भक्तश्च धर्मे रतः।
गार्हस्थ्ये निपुणो धनार्जनरतः कार्याणि कुर्वन् सदा
जीव्याद्वर्षशतं प्रसन्नहृदयो राजेन्द्रवर्यः सुधीः।।११।।

डा. रघुनाथशर्माणं प्रति–

हैमाचलीयो मम शिष्य एष चकार शोधं खलु न्यायतन्त्रे
धन्यश्च सोऽयं रघुनाथ नामा जीयात्प्रसन्नः पटुशिक्षकोऽयम्।।१२।।

डा. अशोकसिहोतां प्रति–

अष्टावक्रसुगीतायां यः शोधं कृतवान् बुधः।
तस्याशोकस्य विज्ञस्य शुभं भूयात्सदैव हि।।१३।।

डा. गौरीदत्तशर्माणं प्रति –

योगदर्शनमासाद्य कृतभूरिपरिश्रमः।
शिक्षको गुणसम्पन्नो गौरीदत्तः प्रसीदतु।।१४।।

डा. सुभाषचन्द्रशर्माणं –

कुसुमाञ्जलिमादाय शोधकार्यं व्याधाद्बुधः।
सुभाषचन्द्रो मे शिष्यः चिरं जीव्यात्सदा सुखी।।१५।।

डा. रामकुमारझामहोदयं प्रति–

शिष्यो रामकुमार एव सततं भक्तिं गुरौ चावहन्
शोधं यः कृतवांश्च नीतिविषये श्रीमन्महाभारते।
नानाकार्यपटुः सदैव निपुणो विद्वत्सु चर्चापरः
जीव्याद्वर्षशतं कुटुम्बसहितः शिष्यः प्रियो धार्मिकः।।१६।।

डा. सत्यकीर्तिशास्त्रिणं प्रति–

यो भक्तो मम शिष्य एव सरलः कार्ये सदा निश्छलः
दुर्गाराधनतत्परो बुधवरः कर्त्तव्यनिष्ठारतः।
वैष्णव्याः परमश्च भक्तिवलितः शक्त्याः सदा पूजकः
जीव्याद्वर्षशतं कुटुम्बसहितः श्रीसत्यकीर्तिः सुधीः।।१७।।

डा. शिवकुमारशर्माणं प्रति–

शिवकुमारशर्माख्यः प्रभाप्रद्युम्नशोधकः
मतिमान् कर्मठः शिष्यः चिरं जीवतु मे प्रियः।।१८।।

डा. विजयचन्द्रझामहोदयं प्रति–

शोधो येन कृतः सुकाव्यविषये साहित्यशास्त्रे मुदा
नानाकार्यरतः प्रशान्तमनसा कार्यं निजं साधयन्।
धर्माचार–विचारशील–निपुणो योऽध्यापयत्यादरात्
चन्द्रः श्रीविजयः सुधीरमतिमान् जीयात्सहर्षं चिरम्।।१९।।

डा. मङ्गलदासं प्रति–

योगी विशिष्टः पुरुषो महात्मा नाम्ना बुधो मङ्गलदास एष।
सांख्यस्य योगस्य च मर्मविज्ञो जीयात्प्रियो मे सतु शिष्यवर्यः।। २०।।

डा. सुदर्शन सिंह गुलेरिया महोदयं प्रति–

नारायणे यस्य दृढास्ति भक्तिः मुक्तिर्यदीयो विषयो विशिष्टः।
सत्साहसी धैर्ययुतः प्रसन्नः जीयाच्चिरं विज्ञसुदर्शनः सः।। २१।।

डा. पीताम्बरदत्तगौतमं प्रति–

यः प्राचार्यवरः सदैव कुरुते भक्तिं गुरौ निश्छलां
शोधं यः कृतवान् मुदा दशमहाविद्याः समाश्रित्य च।
नानाकार्यरतः सदा बुधवरः हैमाचलीं प्राप्तवान्
श्री पीताम्बरदत्त एष निपुणो जीयात्सहर्षं चिरम्।। २२।।

एते विशिष्टा बहु–शास्त्रविज्ञाः शिष्या मदीयाः खलु शोधकार्ये।
चक्रुश्च ते शोधमुपाधिभाजः सदा प्रसन्नाः सुखिनो भवन्तु।। २३।।

श्री कण्ठचरिते काव्ये यया शोधो व्यधायि नु।
जीयात्सा **वचनोगुप्ता** प्राप्तोपाधिं मुदान्विता।। २४।।

कथासाहित्यमासाद्य प्राप्तोपाधिं च शिक्षिका
**विनोदशर्मा** सा शिष्या प्रसन्ना चास्तु सर्वदा।। २६।।

खण्डनखण्डाभिधे ग्रन्थे साहाय्यं प्राप्य यो नरः।
योगी **यज्ञपुरी** नाम शान्तिं प्राप्नोतु सर्वथा।
गोवर्धनकृतान् ग्रन्थान् **रत्नचन्द्रो** द्विजः प्रियः।
अधीत्य कृतवान् शोधं चिरञ्जीवतु भक्तिमान्।। २७।।

धन्या **सन्तोषगुप्ता** या साहित्ये परिशीलनम्।
प्राप्योपाधिं चिरं जीयात्कुटुम्बेन मुदान्विता।। २८।।

विभिन्नासु च कक्षासु ममैव शरणं गता।
तन्त्रालोकसमासाद्य प्राप्योपाधिञ्च शिक्षिका।। २९।।

या सदा निरता कार्ये भक्ता मयि सदा प्रिया।
जीयाद्वर्षशतं सा तु गुप्ता **किरणनामिका**।। ३०।।

स्वानुजं प्रति–

वत्सलाञ्छनमासाद्य शोधं यः कृतवान् स्वयम्।
ममानुजश्चिरं जीव्यात्**सतीरमणनामकः**।।

भगिनीद्वयं प्रति–

चण्डिका **चण्डिकां** रक्षेद्भगिनीं मम सोदरीम्
**पीताम्बरीञ्च** विदुषीं पायाद् दुर्गा शिवा सदा।। ३२।।

अन्यांश्च बालकान् सर्वान् बालिकाश्च शिशूनपि
रक्षन्तु मातरः सर्वाः छात्रान् भ्रातृन् च सर्वदा।। ३३।।

स्नुषां प्रति –

स्नुषा **नीलमधेया** या किशोरगृहिणी प्रिया।
जीव्याच्चिरं प्रसन्ना सा पुत्रपौत्रसमन्विता।। ३४।।

**श्रीज्योतिरमणं** स्निग्धं **श्रीरमणञ्च** ततः परम्।
**चञ्चलां** श्रीमतीं **नन्दां शिखां तस्याः सहोदरम्**।। ३५।।

**आर्यां कात्यायनीं राजूं, मनीषाञ्च सनातनम्**
**मनोजञ्च नवीनञ्च सुमन्तं चानिलं तथा।**
**अनुपमां सुधीरञ्च, सर्वान् बालांश्च भूरिशः**
देवाः पान्तु सदा सर्वे, तेषामीहे शुभं सदा।। ३६।।

## प्रणामाञ्जलिः

स्वर्गतं पितरं श्रीरेवतीरमणझाचरणं प्रति–

बाल्ये येन सुपाठितः शुभकरैः सन्ताड्य पित्रा भृशं,
दुर्गासप्तशती समेतविविधग्रन्थाश्च लाभप्रदाः।
तं देवं जनकं बुधं नरवरं सन्तोषरत्नाकरं
पूज्यञ्छ्रीयुतरेवतीरमणझातातं भजे स्वर्गतम्।।

जननीं श्रीमतीं **सरस्वतीदेवीं** प्रति–

दिव्यानन्दकरी सदा सुखकरी क्लेशं मुहुः प्राप्य या
वस्त्रं भोज्यमथापि सौख्यसहितं सन्तज्य चान्नं यदि,
नानादुःखमवाप्य सन्ततिकृते चिन्तारता सर्वदा
माता साद्य सरस्वती गुणवती पायात्सुतान् नः सदा।।

व्रजगोपालनामाख्यं पितामहमहं सदा।
वन्दे शशिधराख्यन्तं प्रपितामहमादरात्।।

मातामहं न्यायविज्ञं नीलाम्बरसुधीवरम्।
स्वर्गतं जनकं नौमि रेवतीरमणं बुधम्।।

रूपनाथं न्यायविज्ञं नानाशास्त्रविदं बुधम्
स्वर्गतं बालकृष्णञ्च मातुलं प्रणमाम्यहम्।।

नमामि सन्तगोपालं पितामहसहोदरम्।
मातुलं रसनाथञ्च न्यायशास्त्रादिकोविदम्।।

**रमानाथं तन्त्रनाथं** स्वर्गतौ श्वशुरौ पुनः
नौमि तौ च सदा भक्त्या पण्डितौ श्रोत्रियौ गुरू।।

**वाग्चीं महाप्रभुं वैद्यं शोभाकान्तं** सुपण्डितम्।
**रामानुजाचार्यवर्यं हृषीकेशं** गुरून् नुमः।।

**श्रीमदनन्तलालाख्यान्** गुरून् नौमि पुनः पुनः।
यत्कृपालवमासाद्य तितीर्षुरस्मि सागरम्।।

गुरुर्मदीयः खलु पितृतुल्यः
श्रीमाननन्तो विबुधाग्रगण्यः।
न्यायादिशास्त्रेषु महाप्रवीणः
पायात्सदा मां हृदयेन शिष्यम्।।

महामती ज्ञानवती गुणज्ञा
**छायाख्यदेवी** गुरुदेवपत्नी।
मातेव सा रक्षतु मां सुपुण्या
धन्या सदा या भुवि **मञ्जुमाता**।।

उद्याने खलु संस्कृतस्य सदने योऽपाठयत्कौमुदीं,
वन्द्यः सोऽद्य **धनुर्धरो** बुधवरः स्वर्गं गतो यः सुधीः।
नानाशास्त्रविशारदो गुरुवरः श्रीमान् **बटेशो**ऽधुना
तौ पातां सुधियौ सदा सुविदितौ स्वर्गाच्च भूलोकतः।।

पूज्यं गुरुं महाप्राज्ञं नानाशास्त्रविशारदम्।
**त्रिलोकनाथशर्माणं** प्रणमामि पुनः पुनः।।

स्वर्गतं विबुधं पूज्यं **परमानन्दनामकम्।**
समर्प्याद्य च वाक्पुष्पं गुरुं नौमि विचक्षणः।

उजानग्रामवास्तव्यः स्वर्गतः पातु मां सदा।
**काञ्चीनाथो** गुरुः श्रेष्ठो मान्यो विद्यालये मम।।

**अम्बिकानाथमिश्रन्तं** मर्मज्ञं चांग्लकोविदम्।
प्रणमामि गुरुं देवं पितृतुल्यं सदा मम।।

ज्येष्ठं सहोदरं वन्दे **श्रीगौरीरमणं** बुधम्।
अध्यापकञ्च मर्मज्ञं सरलं भ्रातरं प्रियम्।।

द्वितीयं भ्रातरं ज्येष्ठं **शचीरमणपण्डितम्।**
शिक्षकं पाटलिपुत्रे धर्मज्ञं कर्मठं नुमः।।

**धर्मनाथं तृप्तिनाथं** भ्रातरं **ठक्कुरं** तथा।
प्रणमामि सदा भक्त्या तान् विशिष्टान् सहायकान्।।

गुरुं नत्वा भक्तया दशशतयुतैः श्लोकनिवहैः
शुचौ शुक्ले पक्षे शुभबुधदिने सप्तमतिथौ।
विवेकानां सारं रस—निधि—नवेन्दौ (1996) सति समे
उमानाथो ग्रन्थं व्यलिखदिहमोदाय जगतः।।

इति पदवाक्यप्रमाणपारावारीणश्रीमदनन्तलालठक्कुरशिष्य—विद्यावाचस्पति डा. उमारमणझाशर्मविरचिता विवेकसाहस्री समाप्ता।

# तरुण प्रकाशन



1/1028, विशाल खण्ड
गोमती नगर, लखनऊ

## हमारे अन्य प्रकाशन

1. प्राचीन भारत में विधवाएँ
   डॉ. देवी प्रसाद तिवारी, 1994, 300/-
2. शाकद्वीपीय मग संस्कृति
   डॉ. गीता राय, 1996, 290/-
3. ग्वालियर दुर्ग मंदिर एवं मूर्तियाँ
   डॉ. अमर सिंह, 1996, 290/-
4. मैं कुछ कहूँ
   नन्दा वल्लभ अवस्थी, 1996, 80/-
5. उदिति एवं दीप्ति
   डॉ. द्वारका नाथ मिश्र, 1996, 60/-

### शीघ्र प्रकाश्य

1. पुरातात्विक सर्वेक्षण (तहसील नवावगंज, जनपद बाराबंकी)
   डॉ० देवी प्रसाद तिवारी
2. रामासरे पुरवा का उत्खनन
   डॉ० देवी प्रसाद तिवारी
3. पुरा वैदिक इतिहास
   प्रो० विश्वम्भर शरण पाठक
4. नृसिंहोपासना का अभ्युदय
   डॉ० ध्यानेन्द्र नारायण दूबे
5. Interstate and International relations in Ancient India
   Dr. S.R. Srivastava
6. गुप्त अभिलेखों का साहित्यिक अध्ययन
   डॉ० विपुला दूबे
7. गाथा सप्तशती ऐतिहासिक एवं सांस्कृतिक अध्ययन
   डॉ० राजेश कुमार मिश्र
8. श्रौतसूत्रों में वर्णित समाज धर्म और दर्शन
   डॉ० रमेश चन्द्र शुक्ल
9. प्राचीन भारत में जातियों की सामाजिक गतिशीलता एवं उनका आर्थिक आधार
   डॉ० अनुराधा विनायक
10. वैदिक कालीन लोक संस्थाएँ
    डॉ० अनीता सिंह